* अथ वेदसाराख्यं *

# शिवसहस्रनाम

* प्रारभ्यते *

श्रीगणेशाय नमः ।

शिवमाहात्म्यसहितम्—

# * शिवसहस्रनाम प्रारभ्यते *

ॐ नमः शिवाय ।

व्यास उवाच ॥ एकदा मुनयः सर्वे द्वारिकां द्रष्टुमागताः ॥ वासुदेवं च सोत्कण्ठाः कृष्णदर्शनलालसाः ॥ १ ॥ ततस्तु भगवान् प्रीतः पूजां चक्रे यथाविधि ॥तेषामाशीस्ततो गृह्य बहुमानपुरःसरम् ॥२॥ तैः पृष्टः कथयामास कुमारप्रभृतं च यत् ॥ चरितं भूमिभारघ्नं लोकानन्दकरं परम् ॥ ३ ॥ मार्कण्डेयमुखाः सर्वे माध्याह्निकक्रियोत्थिताः ॥ कृष्णः स्ना-

नमथो चक्रे मृदाक्षतकुशादिभिः ॥ ४ ॥ सूर्योपस्थानसंध्यां च स्मृति-धर्ममनुस्मरन् ॥ शिवपूजां ततः कृष्णो गंधपुष्पाक्षतादिभिः ॥ ५ ॥ चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् ॥ जय शंकर सोमेश रक्ष रक्षेति चाब्रवीत् ॥ ६ ॥ जजाप शिवसाहस्रं भुक्तिमुक्तिप्रदं विभुः ॥ अनन्यमानसः शांतः पद्मासनपरः शुचिः ॥ ७ ॥ ततस्ते विस्मयापन्ना दृष्ट्वा कृष्णविचेष्टितम् ॥ मार्कण्डेयोऽवदत्कृष्णं बहुशो मुनिपुङ्गवः ॥८॥ मार्कण्डेय उवाच॥त्वं विष्णुः कमलाकान्तः परमात्मा जगद्गुरुः॥ तव पूज्यः कथं शम्भुरेतत्सर्वं वदस्व मे ॥ ९ ॥ व्यास उवाच ॥ अथ ते मुनयः सर्वे मार्कण्डेयं समर्चयन् ॥ वचोभिर्वासुदेवस्य पृष्टं साधु त्वयेति च ॥ १० ॥ श्रीकृष्ण उवाच ॥ साधु साधु मुने पृष्टं हिताय सकलस्य च ॥ अज्ञातं तव

नास्त्येव तथापि च वदाम्यहम् ॥ ११ ॥ दैवतं सर्वदेवानां सर्वकारणकारणम् ॥ ज्योतिर्यत्परमानन्दं सावधानमतिः शृणु ॥ १२ ॥ विश्वसाधनमीशानं गुणातीतमजं परम् ॥ जगतस्तस्थुशो ह्यात्मा मम मूलं महामुने ॥१३॥ यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः ॥ स शिवः स महादेवः शङ्करश्च निरञ्जनः ॥ १४ ॥ तस्मान्नान्यपरो देवस्त्रिषु लोकेषु विद्यते ॥ सर्वज्ञः सर्वगः शंभुः सर्वात्मा सर्वतो मुखः ॥ १५ ॥ पठ्यते सर्ववेदान्ते सिद्धान्ते यो मुनीश्वरैः॥ तस्मिन्भक्तिर्महादेवे मम धातुश्च निर्मला ॥१६॥ महेशः परमं ब्रह्म शांतः सूक्ष्मः परात्परः ॥ सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥ १७ ॥ निर्विकल्पो निराभासो निःसंगो निरुपद्रवः ॥ निर्लेपः पुरुषाध्यक्षो महापुरुष ईश्वरः ॥ १८ ॥ तस्य चेच्छाभवत्पूर्वं

जगतस्थित्यन्तकारिणी ॥ वामाङ्गादभवत्तस्य सोयं विष्णुरिति स्मृतः ॥१९॥ जनयामास धातारं दक्षिणाङ्गात्सदाशिवः ॥ मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ॥ २० ॥ तपस्तपन्तु भो वत्सा अब्रवीदिति ताञ्छिवः ॥ ततस्ते शिवमात्मानं प्रोचुः संयतमानसाः ॥ २१ ॥ स्तुत्वा तु विविधैः स्तोत्रैः प्रणम्य च पुनः पुनः ॥ ब्रह्मविष्णुमहेश्वरा ऊचुः ॥ तपः केन प्रकारेण कर्त्तव्यं परमेश्वर ॥ २२ ॥ ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सि नापरः ॥ शिव उवाच ॥ कायेन मनसा वाचा ध्यानपूजाजपादिभिः ॥ २३ ॥ कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ॥ देवा ऊचुः ॥ त्वया यत्कथितं शंभो दुर्ज्ञेयमजितात्मभिः ॥ सौम्योपायमतो ब्रह्मन् वद कारुण्यवारिधे ॥ २४ ॥ शिव उवाच ॥ सहस्रनामसद्विद्यां जपन्तु मम सुव्रताः ॥ २५ ॥

यया संसारमग्नानां मुक्तिर्भवति शाश्वती ॥ शृण्वन्तु तद्विधानं हि महापातकनाशनम् ॥ २६ ॥ पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी ॥ ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रियः ॥ २७ ॥ भस्मधारी मुनिर्मौनी पद्मासनसमन्वितः ॥ ध्यात्वा मां सकलाधीशं निराकारं मुनीश्वरम् ॥२८॥ पार्वतीसहितं शर्वं जटामुकुटमंडितम् ॥ वसानं चर्म्म वैयाघ्रं चन्द्रार्द्धकृतशेखरम् ॥ २९ ॥ त्र्यम्बकं वृषरूढं कृत्तिवाससमुज्वलम् ॥ सुरार्चितपदद्वन्द्वं दिव्यभोगं सुसुन्दरम् ॥ ३० ॥ बिभ्राणं सुप्रसन्नं च कुठारं च वराभयान् ॥ दुर्द्धर्षं कमलासीनं नागयज्ञोपवीतिनम् ॥ ३१ ॥ विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् ॥ सहस्रशिरसं शंभुमनन्तकरसंयुतम् ॥ ३२ ॥ सहस्रचरणं दिव्यं सोमसूर्याग्निलो-

चनम् ॥ जगद्योनिमजं ब्रह्म शिवमाद्यं सनातनम् ॥ ३३ ॥ दंष्ट्राकरालं दुष्प्रेक्ष्यं सूर्यकोटिसमप्रभम् ॥ निशाकरकराकारं भेषजं भवरोगिणाम् ॥३४॥ पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम् ॥ कालात्मानं कालकालं देवदेवं महेश्वरम् ॥ ३५ ॥ ज्ञानवैराग्यसम्पन्नं योगानन्दमयं परम् ॥ शाश्वतैश्वर्यसंपन्नं महायोगीश्वरेश्वरम् ॥३६॥ समस्तशक्तिसंयुक्तं पुण्यकायं दुरासदम् ॥ तारकं ब्रह्म संपूर्णमणीयांसं महत्तमम् ॥३७॥ यतीनां परमं ब्रह्म यतीनां तपसः फलम् ॥ संयमिहृत्समासीनं तपस्विजनसंपदम् ॥ ३८ ॥ विधीन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम् ॥ महादेवं महात्मानं देवानामपि दैवतम् ॥३९॥ शिवकवचमारम्भः ॥ शांतं पवित्रमोंकारं ज्योतिषां ज्योतिरुत्तमम् ॥ शङ्करो मे शिरः पातु ललाटं भाललोचनः ॥४०॥ विश्वचक्षुर्दृशौ

पातु रुद्रो मम भ्रुवावपि ॥ गराडौ पातु महेशानः श्रुती रक्षतु पूर्वजः ॥४१॥ कपोलौ मे महादेवः पातु नासां सदाशिवः ॥ मुखं पातु हविर्भोक्ता ओष्ठौ पातु महेश्वरः॥४२॥ दन्तान् रक्षतु देवेन्द्रस्तालु सोमकलाधरः ॥रसनां परमानन्दः पातु गलौ शिवाप्रियः॥४३॥ चिबुकं पातु मे शंभुः श्मश्रून् शत्रुविनाशकः कूर्चं पातु भवः कराठं नीलकराठोऽवतुध्रुवम्॥४४॥स्कन्धौ स्कंधपतिर्बाहु बहु-हस्तधरः सदा ॥ उपबाहु महावीर्य्यः करौ विबुधसत्तमः ॥४५॥ अंगुलीः पातु पंचास्यः पर्वाणि च सहस्रपात ॥ हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ॥४६॥ उदरं हुतभुक्पातु मध्यं मे मध्यमेश्वरः ॥ कुक्षौ पातु भवानीशः पृष्ठं पातु कुलेश्वरः॥ ४७ ॥ प्राणान्मे प्राणदः पातु नाभिं भीमः कटिं विभुः ॥ सक्थिनी पातु मे भर्गो जानुनी जनकाधिपः ॥४८॥जंघे पुररिपुः

पातु चरणौ भवनाशनः ॥ शरीरं पातु मे शर्वो बाह्यमाभ्यन्तरं शिवः ॥४९॥ इन्द्रियाणि हरः पातु सर्वत्र जयवर्द्धनः ॥ पूर्वं पातु मृडः पातु दक्षिणे यमसूदनः ॥ ५० ॥ वारुण्यां सलिलाधीश उदीच्यां मे महीधरः ॥ ईशान्यां पातु भूतेश आग्नेय्यां रविलोचनः ॥ ५१ ॥ नैर्ऋत्यां भूतभृत्पातु वायव्यां बलवर्द्धनः ॥ ऊर्ध्वं पातु भवद्वेषी अधः संसारनाशनः ॥५२॥ सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः ॥ एवं न्यासादिकं कृत्वा साक्षाच्छम्भुमयो भवेत् ॥ ५३ ॥ नमो हिरण्यबाहवे इति पठेन्मंत्रं तु भक्तितः ॥ नमो हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतये, पशुपतये नमो नमः ॥५४॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ भवे भवे नातिभवे भवस्वमां भवोद्भवाय नमः ॥ ५५ ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय

नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ ५६ ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमोऽस्तु रुद्ररूपेभ्यः ॥ ५७ ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ ५८ ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ ५९ ॥ सद्यो जातादिभिर्मन्त्रैर्नमस्कुर्यात्सदाशिवम् ॥ ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ॥ ६० ॥ सर्वकार्यकरं पुण्यं महापातकनाशनम् ॥ सर्वगुह्यतमं दिव्यं सर्वलोकहितप्रदम् ॥ ६१ ॥ मन्त्राणां परमं मंत्रं भवदुःखषडूर्मिहृत् ॥ अथाङ्गन्यासः ॥ ॐ नमः शिवायेति षडङ्गन्यासः ॥

ॐ नमः शम्भवाय च हृदयाय नमः ॥ ॐ नमो भवाय च शिरसे स्वाहा ॐ नमः शंकराय च शिखायै वषट् ॥ ॐ नमो मयस्कराय च कवचाय हुम् ॥ ॐ नमः शिवाय च नेत्रत्रयाय वौषट् ॥ ॐ नमः शिवाय शिवतराय च अस्त्राय फट् ॥ नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिङ्गामृतात्मने ॥ चतुर्मूर्तिवपुःस्थाय भूषिताङ्गाय शम्भवे ॥ अस्य श्रीवेदसाराख्यपरमदिव्यशिवसहस्रनामस्तोत्रमन्त्रस्य नारायणऋषिरनुष्टुप्छन्दः ॥ सदाशिवो देवता ॥ ॐ नमः इति बीजम् ॥ शिवायेति शक्तिः ॥ चैतन्यमिति कीलकम् ॥ सदाशिवप्रीत्यर्थं जपे विनियोगः ॥ अथ ध्यानम् । ॐ कोटिसूर्यप्रतीकाशं त्रिनेत्रं चन्द्रशेखरम् ॥ शूलटंकगदाचक्रकुन्तपाशधरं विभुम् ॥ ॐ नमः पराय देवाय शङ्कराय महात्मने ॥ कामिने नीलकण्ठाय निर्मलाय

कपर्दिने ॥ १ ॥ निर्विकल्पाय शान्ताय निरहङ्कारिणे नमः ॥ अनर्घ्याय विशालाय शालहस्ताय ते नमः ॥ २ ॥ निरञ्जनाय शर्वाय निःशंकाय परात्मने ॥ नमः शिवाय भर्गाय गुणातीताय वेधसे ॥ ३ ॥ महादेवाय पीताय पार्वतीपतये नमः ॥ कैवल्याय महेशाय विशुद्धाय बुधात्मने ॥ ४ ॥ कैवल्याय सुधेशाय निस्पृहाय स्वरूपिणे ॥ नमः सोमाय भूपाय कालायामिततेजसे ॥ ५ ॥ अजराय जगत्पित्रे जनकाय पिनाकिने ॥ निराधाराय सिंहाय मायातीताय ते नमः ॥ ६ ॥ बीजाय सर्वभूताय पशूनां पतये नमः ॥ पुरन्दराय भद्राय पुरुषाय महीयसे ॥ ७ ॥ महासंतोषरूपाय ज्ञानिने शुद्धबुद्धये ॥ बुद्धाय बहुरूपाय ताराय परमात्मने ॥ ८ ॥ पूर्वजाय सुरेशाय ब्रह्मणोऽनन्तमूर्तये ॥ निरक्षराय सूक्ष्माय

कैलासपतये नमः ॥ ९ ॥ निरामयाय कान्ताय निराकाराय ते नमः ॥
सलिलात्मस्वरूपाय सोहं तत्त्वाय ते नमः ॥ निरालम्बाय नित्याय नित्या
याः पतये नमः ॥ १० ॥ आत्मारामाय कव्याय पूज्याय परमेष्ठिने ॥
विकर्तनाय भीमाय शम्भवे विश्वरूपिणे ॥ ११ ॥ हंसाय हंसनाथाय
प्रसिद्धाय नमो नमः ॥ परात्पराय रुद्राय भवायालंघ्यशक्तये ॥ १२ ॥
इन्द्रहन्त्रे निधीशाय कालहन्त्रे मनस्विने ॥ विश्वमात्रे जगद्धात्रे जगन्नेत्रे
नमो नमः ॥ १३ ॥ जटिलाय विरोगाय पवित्राय मृडाय च ॥
निरवद्याय धीराय निरातङ्काय ते नमः ॥ नादाय रविनेत्राय व्योमके-
शाय ते नमः ॥ १४ ॥ चतुर्भोगाय साराय योगिनेऽनन्तमायिने ॥
धर्मिष्ठाय वरिष्ठाय पुरत्रयविघातिने ॥ १५ ॥ गरिष्ठाय गिरीशाय वरदाय

नमो नमः ॥ व्याघ्रचर्माम्बरायाथ दिशावस्त्राय ते नमः ॥ १६ ॥ परमार्थाय मात्राय प्रमथाय स्वचक्षुषे ॥ आद्याय शूलहस्ताय शितिकण्ठाय तेजसे ॥ १७ ॥ उग्राय वामदेवाय श्रीकण्ठाय च ते नमः ॥ विश्वेश्वराय सूर्याय गौरीशाय वराय च ॥ १८ ॥ मृत्युञ्जयाय वीराय वीरभद्राय ते नमः ॥ ११ ॥ विरूपाक्षाय विधये वह्निनेत्राय ते नमः ॥ जालन्धरशिरश्छेत्रे हविषे हितकारिणे ॥ २० ॥ महाकालाय वैद्याय घुसृणेशाय ते नमः ॥ नम ॐ काररूपाय सोमनाथाय ते नमः ॥ २१ ॥ रामेश्वराय शुचये भीमेशाय नमो नमः ॥ त्र्यम्बकाय निरीहाय केदाराय नमोनमः ॥ २२ ॥ गंगाधराय कवये नागनाथाय ते नमः ॥ भक्तप्रियाय महसे रश्मीशाय नमो नमः ॥ २३ ॥ पूर्णाय भूतपतये सर्वज्ञाय दयालवे

धर्माय धनदेशाय गजचर्माम्बराय च ॥२४॥ भालनेत्राय यज्ञाय श्रीशैल-पतये नमः॥ कृशानुरेतसे नीललोहिताय नमो नमः॥२५॥ अन्धकासुरहन्त्रे च पावनाय बलाय च ॥ चैतन्याय त्रिनेत्राय दक्षनाशकराय च॥२६॥नमः सहस्रशिरसे जयरूपाय ते नमः॥सहस्रचरणायाथ योगिहृत्कुञ्जवासिने॥२७॥ सद्यो[illegible]ताय वन्द्याय सर्वदेवमयाय च ॥ आमोदाय प्रगल्भाय गायत्रीवल्लभाय च ॥ २८ ॥ व्योमाकाराय विप्राय नमो विप्रप्रियाय च ॥ अघोराय सुवेशाय श्वेतरूपाय ते नमः ॥ २९ ॥ विद्वत्तमाय वक्राय विश्वग्रासाय नन्दिने ॥ अधर्मशत्रवे तापदुन्दुभीमथनाय च ॥ ३० ॥ अजातशत्रवे तुभ्यं जगत्प्राणाय ते नमः ॥ नमो ब्रह्मशिरश्छेत्रे पञ्चवक्त्राय खड्गिने ॥ ३१ ॥ हरिकेशाय विभवे पञ्चवर्णाय वज्रिणे ॥ नमः पञ्चाक्षरायाथ

गोवर्द्धनगताय च ॥ ३२ ॥ प्रभवे जनबीजाय कालकूटविषादिने ॥ सिद्धेश्वराय सिद्धाय सहस्रवदनाय च ॥ ३३ ॥ नमः सहस्रहस्ताय सहस्र-नयनाय च ॥ सहस्रमूर्तये तुभ्यं विष्णवे जितशत्रवे ॥ ३४ ॥ काशी-नाथाय गोप्त्रे ते नमस्ते विश्वसाक्षिणे ॥ हेतवे सर्वबीजानां पालकाय नमो नमः ॥ ३५ ॥ जगत्संहारकाराय त्रिधावस्थाय ते नमः ॥ एका-दशस्वरूपाय नमस्ते बहुमूर्तये ॥ ३६ ॥ नरसिंहमहादर्पघातिने शरभाय च ॥ भस्माभ्यक्ताय तीर्थाय जाह्नवीजनकाय च ॥ ३७ ॥ देवदानवदै-त्यानां गुरवे ते नमो नमः ॥ दलिताञ्जनभासाय नमो वायुस्वरूपिणे ॥ ३८ ॥ नमः स्वेच्छस्वरूपाय प्रसिद्धाय नमो नमः । वृषभध्वजाय गोष्ठ्याय जगद्यन्त्रप्रवर्तिने ॥ ३९ ॥ अनाथाय प्रजेशाय विष्णुगर्वहराय

च ॥ हरिविधानृकलहनाशकाय नमो नमः ॥ ४० ॥ गदाहस्ताय बद्धे गगनाय नमो नमः ॥ कैवल्यफलदात्रे ते परमाय नमो नमः ॥ ४१ ॥ ज्ञानगम्याय ज्ञानाय घंटारवप्रियाय च ॥ पद्मासनाय पुष्टाय निर्वाणाय नमो नमः ॥ ४२ ॥ अयोनये सदेहाय ह्युत्तमाय नमो नमः ॥ अन्तकाला-धिपतये विशालाक्षाय ते नमः ॥ ४३ ॥ कुबेरबन्धवे तुभ्यं सोमाय सुखिने नमः ॥ अमृतेशाय सौम्याय खेचराय च धन्विने ॥ ४४ ॥ प्रियंवदाय दक्षाय वंदिने विभवाय च ॥ गिरीशाय गिरित्राय गिरिशंताय ते नमः ॥४५॥ पारिजाताय बृहते पंचयज्ञाय ते नमः ॥ तरुणाय विशिष्टाय बालरूपधराय च ॥ ४६ ॥ जीवितेशाय पुष्टाय पुष्टानां पतये नमः ॥ भवहेत्यै हिरण्याय कनिष्ठाय नमो नमः ॥ ४७ ॥ मध्यमाय विधात्रे च

शूराय सुभगाय च ॥ आदित्यतापनायाथ पुण्यश्लोकाय ते नमः ॥ ४८ ॥ महाह्रदाय ह्रस्वाय वामनाय नमो नमः ॥ नमस्तत्पुरुषायाथ चतुर्हस्ताय मायिने ॥ ४९ ॥ नमो धूर्जटये तुभ्यं जगदीशाय ते नमः ॥ जगन्नाथाय महसे लीलाविग्रहधारिणे ॥ ५० ॥ अभयाय नमस्तुभ्यममराय नमो नमः ॥ अताम्राय नमस्तुभ्यमक्षयाय नमो नमः ॥ ५१ ॥ लोकाध्यक्ष नमस्तुभ्यमनादिनिधनाय च ॥ व्यक्तोत्तराय व्यक्ताय नमस्ते परमाणवे ॥ ५२ ॥ लघवे स्थूलरूपाय नमः परशुधारिणे ॥ नमः खट्वांगहस्ताय नागहस्ताय ते नमः ॥ ५३ ॥ वरदाभयहस्ताय घण्टाहस्ताय ते नमः ॥ घस्मराय नमस्तुभ्यमजिताय नमो नमः ॥ ५४ ॥ अणिमादिगुणेशाय पंचब्रह्ममयाय च ॥ पुरातनाय शुद्धाय बलप्रमथनाय च ॥५५॥

पुण्योदयाय पद्माय विमुक्ताय नमो नमः ॥ उदाराय विचित्राय विचित्र-गतये नमः ॥ ५६ ॥ वाग्विशुद्धाय चितये निर्गुणाय नमो नमः ॥ परमेशाय शेषाय नमः परतराय च ॥ ५७ ॥ महेन्द्राय सुशीलाय करवीरप्रियाय च ॥ महापराक्रमायाथ नमस्ते कालरूपिणे ॥ ५८ ॥ विष्टर-श्रवसे लोकचूड़ारत्नाय ते नमः ॥ सम्राजे कल्पवृक्षाय करुणाय नटाय च ॥ ५९ ॥ अनर्घ्याय वरेण्याय वज्ररूपाय ते नमः ॥ परमज्योतिषे पद्मगर्भाय सलिलाय च ॥६०॥ तत्त्वाधिकाय तत्त्वाय नमो दीर्घाय रङ्गिणे ॥ नमस्ते पाण्डुरङ्गाय गौराय ब्रह्मचारिणे ॥ ६१ ॥ अणवे निष्कलायाथ सामगानप्रियाय च ॥ नमोऽव्ययाय देवाय नमस्ते पूर्णमूर्तये ॥ ६२ ॥ कलाधराय पूज्याय पञ्चभूतात्मने नमः ॥ निर्वाणाय च तथ्याय पापनाश-

कराय च ॥ ६३ ॥ विश्वतश्चक्षुषे कालयोगिनेऽनन्तरूपिणे ॥ सिद्धसाधकरूपाय नमो मेदिनिरूपिणे ॥६४ ॥ अगराघाय प्रतापाय सुधाहस्ताय ते नमः ॥ श्रीवल्लभाय निधये स्थाणवे मधुराय च ॥ ६५ ॥ उपाधिरहितायाथ नमः सुकृतराशये ॥ नमो मुनीश्वरायाथ शिवानन्दाय ते नमः ॥ ६६ ॥ रिपुघ्नाय नमस्तेजोराशयेऽनुत्तमाय च ॥ चतुर्मूर्तिवपुःस्थाय नमो बुद्धीन्द्रियात्मने ॥ ६७ ॥ उपद्रवहरायाथ प्रियसंदर्शनाय च ॥ भूतनाथाय भूताय वीतरागाय ते नमः ॥ ६८ ॥ नैष्कर्म्याय निरूपाय षड्वक्त्राय विशुद्धये ॥ क्लेशाय भूतभृते भुवनेशाय ते नमः ॥ ६९ ॥ हिरण्यबाहवे जीववरदाय नमो नमः ॥ आदिदेवाय भर्गाय चन्द्रसंजीवनाय च ॥ ७० ॥ हराय बहुरूपाय प्रसन्नाय नमो नमः ॥ आनन्दभरिता-

याथ कूटस्थाय नमो नमः ॥ ७१ ॥ नमो मोक्षफलायाथ शाश्वताय विरागिणे ॥ यज्ञभोक्त्रे सुषेणाय दक्षयज्ञविघातिने ॥ ७२ ॥ नमः सर्वात्मने तुभ्यं विश्वपालाय ते नमः । विश्वगर्भाय गर्भाय वेदगर्भाय ते नमः ॥ ७३ ॥ संसारार्णवमग्नानां दुःखसंसारहेतवे ॥ मुनिप्रियाय जीवाय मूलप्रकृतये नमः ॥ ७४ ॥ समस्तबन्धवे तेजोमूर्तये ते नमो नमः ॥ आश्रमस्थापकायाथ वर्णिने सुन्दराय च ॥ ७५ ॥ मृगबाणार्पणायाथ शारदावल्लभाय च ॥ विचित्रमायिने तुभ्यमलंकरिष्णवे नमः ॥ ७६ ॥ बहिर्मुखमहादर्पमथनाय नमो नमः ॥ नमोऽष्टमूर्तये तुभ्यं निष्कलंकाय ते नमः ॥ ७७ ॥ नमो हव्याय भोज्याय यज्ञनाथाय ते नमः ॥ नमो मध्याय मुख्याय वसिष्ठाय नमो नमः ॥ ७८ ॥ त्र्यंबिकापतये तुभ्यं महा-

दन्ताय ते नमः ॥ सत्यप्रियाय सत्याय प्रियनृत्याय ते नमः ॥ ७९ ॥ नित्यनृत्याय वेदित्रे मृगहस्ताय ते नमः ॥ अर्द्धनारीश्वरायाथ कुठारयुतपाणये ॥ ८० वराभयप्रदात्रे ते बहुरूपाय ते नमः ॥ महार्थाय सुसत्त्वाय कीर्तिस्तम्भाय ते नमः ॥ ८१ ॥ नमः कृतागमायाथ वेदान्तपठिताय च ॥ अश्रोत्राय श्रुतिमते बहुश्रुतितराय च ॥ ८२ ॥ अघ्राणाय नमस्तुभ्यं गंधावग्रहकारिणे । पादहीनाय वोढाय सर्वत्रगतये नमः ॥ ८३ ॥ अनेत्राय जननेत्राय नमस्तुभ्यं चिदात्मने ॥ रसज्ञाय नमस्तुभ्यं रसनारहिताय च ॥ ८४ ॥ अमूर्तायाथ मूर्ताय सदसस्पतये नमः ॥ जितेन्द्रियाय तथ्याय परंज्योतिःस्वरूपिणे ॥ ८५ ॥ नमस्ते सर्वमर्त्यानामादिकर्त्रे दयालवे ॥ सर्गस्थितिविनाशानां कर्त्रे ते प्रेरकाय च ॥ ८६ ॥ नमोऽन्तर्यामिणे सर्व-

हृदिस्थाय नमोनमः ॥ चक्रभ्रमणकर्त्रे ते पुराणाय नमो नमः ॥ ८७ ॥ वामदक्षिणपार्श्वाय लोकेश हरिशालिने ॥ नमः सकलकल्याणदायिने प्रसवाय च ॥ ८८ ॥ स्वभावो धरधीराय सूत्रकाराय ते नमः ॥ विषयार्णवमग्नानां समुद्धरणसेतवे ॥ ८९ ॥ अस्नेहस्नेहरूपाय वार्तानिक्रांतवर्तिने ॥ यत्र सर्वं यतः सर्वं सर्वं यत्र नमो नमः॥९० ॥ नमो महार्णवायाथ भास्कराय नमो नमः ॥ भक्तिगम्याय भक्तानां सुलभाय नमोनमः॥९१॥ दुष्प्रधर्षाय दुष्टानां विज्ञेयाय विवेकिनाम् ॥ अलौकिकाय लोकाय इहलोकाय नमो नमः ॥ ९२ ॥ पूरयित्रे विशेषाय कुशलाय शुभाय च ॥ नमः कर्पूरगौराय सर्पहाराय ते नमः ॥ ९३ ॥ नमः संसारपाराय कमनीयाय ते नमः ॥ बाह्यदर्पविघाताय बाह्यदर्पविघातिने ॥ ९४ ॥ जरातिगाय

वीर्य्याय वेद्याय व्यापिने नमः ॥ सूर्य्यकोटिप्रकाशाय निष्क्रियाय नमो नमः ॥ १५ ॥ चन्द्रकोटिसुशीताय कपिलाय नमो नमः ॥ नमो गूढ-स्वरूपाय निश्चलाय पराय च ॥ १६ ॥ नमः सत्यप्रतिज्ञाय नमस्ते सुम-माधये ॥ एकरूपाय शून्याय विश्वनाभिहृदाय च ॥ १७ ॥ पूर्वोत्तमाय लोकाय प्राणाय सुहृदे नमः ॥ नमःपरायणायाथ चिन्मात्राय नमो नमः ॥ १८ ॥ ध्यानगम्याय ध्येयाय ध्यानरूपाय ते नमः ॥ नमस्ते शाश्वतैश्वर्य्यविभवाय नमो नमः ॥ ११ ॥ नमः प्राणेश्वरायाथ सर्व-शक्तिधराय च ॥ धर्माधाराय धन्याय पुष्कलाय नमो नमः ॥ १०० ॥ प्रतिष्ठायै धर्म्मगोप्त्रे निधनायाग्रजाय च ॥ योगेश्वराय योगाय योगग-म्याय ते नमः ॥ १ ॥ महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमो नमः ॥ महर्षिवन्दि-

तायाथ प्रकाशाय सुधर्मिणे ॥ २ ॥ नमो हिरण्यगर्भाय नमो हिरण्मयाय च ॥ जगद्बीजाय हाराय सेव्याय क्रतवे नमः ॥ ३ ॥ आधिपत्याय कामाय स्वराय यशसे नमः ॥ नमः प्रचेतसे ब्रह्ममयाय सकलाय च ॥ ४ ॥ नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये ॥ योगात्मनेऽचिन्तिताय दिव्यनृत्याय ते नमः ॥५॥ जगतामेकनाथाय मायाबीजाय ते नमः ॥ सर्वहृत्सन्निविष्टाय ब्रह्मचक्रभ्रमाय च ॥६॥ ब्रह्मानन्दाय भवते ब्रह्मण्याय नमो नमः ॥ भूमिभारार्तिसंहर्त्रे भवसारथये नमः ॥ ७ ॥ हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय च ॥ दुर्वाससे षड्विकाररहिताय नमो नमः ॥८॥ नमो देहार्द्धकान्ताय षडूर्मिरहिताय च ॥ प्रकृत्यै भवनाशाय ताम्राय परमेष्ठिने ॥ ९ ॥ अनन्तकोटिब्रह्माण्डनायकाय नमो नमः ॥ एकाकिने निर्म-

लाय द्रविणाय दमाय च ॥११०॥ नमस्त्रिलोचनायाथ शिपिविष्टाय बन्धवे॥ त्रिविष्टपेश्वरायाथ नमो व्याघ्रेश्वराय च ॥ ११ ॥ विश्वेश्वराय दात्रे ते नमश्चण्डेश्वराय च ॥ व्यासेश्वराय बुध्निने कण्डुकेशाय ते नमः॥१२॥ योगेश्वराय दिवोदासेश्वरायाथ च ॥ नागेश्वराय न्यायाय न्यायनिर्वाहकाय च ॥१३॥ शरण्याय सुपात्राय कालचक्रप्रवर्तिने ॥ विचक्षणाय दंष्ट्राय श्वेताश्वाय नमो नमः ॥ १४ ॥ नीलजीमूतदेहाय परात्मज्योतिषे नमः ॥ शरणागतपालाय महाबलपराय च ॥ १५ ॥ सर्वपापहरायाथ महानादाय ते नमः ॥ कृष्णस्य जयदात्रे ते बिल्वकेशाय ते नमः ॥१६॥ दिव्यभोगाय दण्डाय कोविदाय नमो नमः ॥ कामपालाय चित्राय विचित्राय नमो नमः ॥ १७ ॥ नमो मातामहायाथ नमस्ते मातरिश्वने ॥

निःसंगाय सुनेत्राय विघ्नेशाय जयाय च ॥ १८ ॥ व्याजसंमर्दनायाथ मध्यस्थाय नमो नमः ॥ अंगुष्ठशिरसा लंकानाथदर्पहराय च ॥ १९ ॥ व्याघ्रपुरनिवासाय नमः सर्वेश्वराय च ॥ नमः परावरेशाय जगत्स्थावर-मूर्तये ॥१२०॥ नमोऽप्यगुणमेयाय शार्ङ्गिणे विष्णुमूर्त्तये ॥ नारायणाय वामाय सुदीप्ताय नमो नमः ॥ २१ ॥ नमो ब्रह्माण्डमालाय गोधराय वरू-थिने ॥ घन्टानादाय सूत्राय नमः पातालवासिने ॥ २२ ॥ नमस्ताराधिनाथाय वागीशाय नमो नमः ॥ सदाचाराय गौराय पुराणपुरुषाय च ॥ २३ ॥ संसारमोचकायाथ वर्णिने लिंगरूपिणे ॥ सच्चिदानन्दरूपाय पापराशिहराय च ॥ २४ ॥ अतर्क्यायाप्रमेयाय प्रमाणाय नमो नमः॥ कलिग्रासाय भक्तानां भुक्तिमुक्तिप्रदायिने ॥ २५ ॥ गजारये विदेहाय

त्रिलिङ्गरहिताय च ॥ २६ ॥ नमो राजाधिराजाय चैतन्यविभवाय च ॥ नमः शुद्धात्मने ब्रह्मज्योतिषे स्वस्तिदाय च ॥ २७ ॥ मयोभुवे च दुर्ज्ञाय समर्थाय च यज्वने ॥ चक्रेश्वराय रुचये नमो नक्षत्रमालिने ॥ २८ ॥ अनर्थ-नाशकायाथ भस्मलेपकराय च ॥ सदानन्दाय विदुषे सुगुणाय विरोधिने ॥ २९ ॥ दुर्गमाय शुभाङ्गाय मृगव्याधाय ते नमः ॥ प्रियाय धर्म्मधाम्ने ते प्रयोगाय विभागिने ॥ ३० ॥ आद्यायामृतपानाय सोमपाय तपस्विने ॥ नमो विचित्रवेषाय पुष्टिसंवर्द्धनाय च ॥ ३१ ॥ चिरन्तनाय धनुषे स्थविराय ध्रुवाय च ॥ नियमायाग्रगण्याय व्योमातीताय ते नमः ॥ ३२ ॥ संवत्सराय लोप्याय स्थानदाय स्थविष्णवे ॥ व्यवसायफलान्ताय महाकर्त्रे प्रियाय च ॥ ३३ ॥ गुणत्रयस्वरूपाय नमः सिद्धिस्वरूपिणे ॥ नमो

नमः स्वरूपाय स्वेच्छाय पुरुषाय च ॥ ३४ ॥ कालान्तराय वेदाय नमो ब्रह्माण्डरूपिणे ॥ अनित्यानित्यरूपाय तन्दतर्वर्तिने नमः ॥३५॥ नमस्तीर्थाय कुल्याय पुण्याय पटवे नमः ॥ पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने ॥ विश्रृङ्खलाय पूर्णाय नमस्ते विषयात्मने ॥ ३६ ॥ अनवद्याय शास्त्राय स्वतन्त्रायामृताय च ॥ नमः प्रौढाय प्राज्ञाय योगारूढाय ते नमः॥३७॥मन्त्रज्ञाय प्रभावाय प्रदीपविमलाय च ॥विश्ववासाय दत्ताय वेदनिःश्वसिताय च ॥ ३८ ॥ यज्ञाङ्गाय सुवीराय नागचूडाय ते नमः ॥ व्याघ्राय बाणहस्ताय स्कन्धाय पत्तिणे नमः ॥३९॥ क्षेत्रज्ञाय रहस्याय स्वस्थाय च वरीयसे ॥ गहनाय विरामाय सिद्धान्ताय नमो नमः ॥ १४० ॥ महीधराय होत्रे ते वटवृक्षाय ते नमः ॥ ज्ञानदीपाय दुर्गाय सिद्धान्तनिश्चयाय च ॥ श्रीमते

मुक्तिबीजाय कुशलाय विलासिने ॥ ४१ ॥ प्रेरकाय विशोकाय हविर्द्धीनाय ते नमः ॥ गम्भीराय सहायाय भोजनाय सुभोगिने ॥ ४२ ॥ महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे ॥ नमः प्रतिष्ठितायाथ महोत्साहाय ते नमः ॥४३॥ परमार्थाय शिशवे प्रांशवे च कपालिने ॥ सहजाय गृहस्थाय सन्ध्यानाथाय जिष्णवे ॥४४॥ षड्भिः सपूजितायाथ बिदलासुरघातिने ॥ जनानन्दाय योग्याय कामेशाय किरीटिने ॥ ४५ ॥ अमोघविक्रमायाथ नग्नाय दलघातिने ॥ संग्रामाय नरेशाय शुचिहास्याय ते नमः ॥ भूतिप्रियाय भूम्ने ते श्येनाय मधुराय च ॥४६॥ मनुष्यबाह्यगतये कृतज्ञाय शिखण्डिने ॥ निर्लेपाय जटार्द्राय महाकालाय भीरवे ॥ ४७ ॥ नमो विरूपरूपाय शक्तिगम्याय ते नमः ॥ नमः सर्वाय सदसत्पराय

सुव्रताय च ॥ ४८ ॥ नमो भक्तिप्रियायाथ श्वेतरत्नापराय च ॥ सुकुमार महापापहराय रथिने नमः ॥ ४९ ॥ नमस्ते धर्मराजाय धनाध्यक्षाय सिद्धये ॥ महाभूताय कल्पाय कल्पनाहरिताय च ॥ १५० ॥ ख्याताय जितविश्वाय गोकर्णाय सुचारवे ॥ श्रोत्रियाय वदान्याय दुर्बलाय कुटुम्बिने ॥५१॥ विरजाय सुगन्धाय नमोविश्वम्भराय च ॥ भवातीताय षष्ठाय नमस्ते सामगाय च ॥५२॥ अद्वैताय द्वितीयाय कल्पराजाय भोगिने ॥ चिन्मयाय नमः शुक्लज्योतिषे क्षेत्रगाय च ॥ ५३॥ सर्वभोगसमृद्धाय सांबराय नमो नमः ॥ नमस्ते स्वप्रकाशाय स्वच्छन्दाय सुतन्तवे ॥ ५४ ॥ सर्वज्ञमूर्तये तुभ्यं हिरण्यरेतसे नमः ॥ शारदाय सुशीलाय कौशिकाय धनाय च ॥५५॥ अभिरामाय तत्वाय व्यक्तकल्पाय ते नमः ॥ अरिष्टमथ-

नायाथ सुप्रतीकाय ते नमः ॥ ५६ ॥ आशवे ब्रह्मगर्भाय वरुणायेन्दवे नमः ॥ नमः कालाग्निरुद्राय श्यामाय सुजनाय च ॥ ५७॥ अहिर्बुध्न्यायाजराय गुह्येशाय सुशान्तये ॥ नमः समयनाथाय सोमपाय गुहाय च ॥ ५८ ॥ निर्मलाय नमस्तुभ्यं छन्दसाराय दंष्ट्रिणे ॥ ज्योतिर्लिङ्गाय मित्राय जगत्सुहितकारिणे ॥ ५९ ॥ नमः कारुण्यनिधये श्लोकाय जयशालिने ॥ ज्ञानोदराय बीजाय जनविश्रामहेतवे ॥ १६० ॥ अवधूताय शिष्टाय छन्दसां प्रभवे नमः ॥ नमः फेणपाय गुह्याय सर्वबन्धविमोचिने ॥ ६१ ॥ उदारकीर्तये शश्वत्प्रसन्नवदनाय च ॥ वसवे वेदकाराय नमो भ्राजिष्णुविष्णवे ॥ ६२ ॥ चक्रिणे देवदेवाय गदाहस्ताय पुत्रिणे ॥ नमस्ते पारिजाताय गणाधिपतये नमः ॥ ६३ ॥ सर्वशाखाधिपतये

भजनेशाय ते नमः ॥ सूक्ष्मप्रमाणभूताय सुरपार्श्वगताय च ॥ ६४ ॥
अशरीराय शुक्राय सर्वान्तर्यामिणे नमः ॥ सुकेशाय सुपुष्पाय श्रुतये
पुष्पमालिने ॥ ६५ ॥ मुनिध्येयाय मुनये बीजस्थाय मरीचये ॥ चामुण्ड-
जनकायाथ नमस्ते कृत्तिवाससे ॥६६॥ व्योमकेशाय योग्याय धर्मपीठाय
ते नमः ॥ महावीर्याय दीप्ताय बुद्धाय शनये नमः ॥ ६७ ॥ शिष्टेष्टाय
मघवते केतवे करुणाय च ॥ कारणाय भगवते बाणदर्पहराय च ॥ ६८ ॥
अतीन्द्रियाय रम्याय ज्ञानानन्दकराय च ॥ सदाशिवाय धौम्याय चिंत्याय
चन्द्रमौलिने ॥ ६९ ॥ नमस्ते जातुकर्णाय सूर्याध्यक्षाय ते नमः ॥
ज्योतिषे कुण्डलीशाय वरदायाचलाय च ॥१७०॥ वसन्ताय सुरभये जया-
नथनाय च ॥ प्रेतपुरंजयायाथ पृषदश्वाय ते नमः ॥ ७१ ॥ रोचिष्णवे

सुरजिते श्वेतपीताय ते नमः ॥ नमस्ते चञ्चरीकाय तमिस्रमथनाय च ॥७२॥ प्रमाथिने निदाघाय चित्रगर्भाय ते नमः ॥ शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः ॥ ७३ ॥ निरवद्याय दानाय विचित्रशक्तये नमः ॥ नमस्तुल्याय महसे वितानपतये नमः ॥ ७४ ॥ अहंकारस्वरूपाय मेधाधिपतये नमः ॥ विक्रमाय स्वतन्त्राय स्वतन्त्रगतये नमः ॥ ७५ ॥ अपाराय तत्त्वविदे त्रयद्धीराय ते नमः ॥ पञ्चास्याय वदान्याय विश्वप्राणेश्वराय च ॥ ७६ ॥ अगोचराय सूक्ष्माय ज्ञेयाय वडवाग्नये ॥ फेरायाय पद्महस्ताय नमस्ते जमदग्नये ॥७७॥ अनावृताय मुक्ताय मातृकापतये नमः ॥ नमस्ते बीजकोशाय तीव्रानन्दाय मुक्तये ॥ ७८ ॥ नमस्ते विश्वदेवाय शान्तरागाय ते नमः ॥ विलोचनाय तोयाय हेमगर्भाय ते नमः

॥ ७९ ॥ अनाद्यन्ताय चराडाय मनोनाथाय ते नमः ॥ ज्ञानस्कंधाय तुष्टाय कपिलाय महर्षये ॥ १८० ॥ नमस्त्रिकाग्निकालाय देवसिंहाय ते नमः ॥ नमस्ते मणिपूराय चतुर्वेदाय ते नमः ॥ ८१ ॥ स्वभावाय सुवासाय ह्यन्तरंगाय ते नमः ॥ नमस्ते शिवधर्माय महाधर्माय ते नमः ॥ ८२ ॥ प्रसन्नाय नमस्तुभ्यं सर्वान्तर्ज्योतिषे नमः ॥ स्वयम्भुवे कुलेशाय यत्नराक्षस मन्महे ॥८३॥ श्रीमहादेव उवाच ॥ जपंतु सततं देवा नाम्नां दशशतीमिमाम् ॥ मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥ ८४ ॥ संग्रामे जयदात्रीं च सर्वसिद्धिमयीं शुभाम् ॥ यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ ८५ ॥ पुत्रकामो लभेत्पुत्रं राज्यकामस्तु राज्यताम् ॥ प्राप्नुयात्परया भक्त्या धनधान्यादिकं बहु ॥ ८६ ॥ शिवालये नदीतीरेऽ

श्वत्थमूले विशेषतः ॥ प्रजपेत्सिद्धिदां देवाः शुचौ देशे शमीतले ॥८७॥ धनकामस्तु जुहुयाद्घृताक्तैर्बिल्वपत्रकैः ॥ मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः ॥ ८८ ॥ पुत्रकामस्तु जुहुयात् तिलाज्येन तथान्धसा ॥ (आयुःकामस्तु जुहुयात् तिलाज्येन तथान्धसा) ॥ आयुःकामस्तु जुहुयादाज्येन मधुना तथा ॥ ८९ ॥ मत्समीपे प्रदोषे च स्पृष्ट्वा भक्त्या जपत्यथ ॥ जीवन्सरूपतां प्रेत्य सायुज्यं समवाप्नुयात् ॥९०॥ कालोऽपि जनशास्ता हि मम भक्तं न लुम्पति ॥ अहं स्वामी सुरास्तस्य नेष्यामि गतकल्मषम् ॥ ९१ ॥ त्रिसंध्यासु जपेद्भक्त्या वत्सरं नियमान्वितैः ॥ मच्चित्तो मन्मना भूत्वा सर्वरोगैः प्रमुच्यते ॥ ९२ ॥ रुद्रपाठेन यत्पुण्यं यत्पुण्यं वेदपाठतः ॥ तत्सर्वं प्राप्यते पुंभिरेकाग्रमनसाऽमराः ॥ ९३ ॥

अश्वमेघसहस्रस्य यत्फलं लभते नरः ॥ कपिलाशतदानस्य तत्फलं पठना-द्भवेत् ॥ १४ ॥ कन्याकोटिप्रदानस्य यत्फलं लभते नरः ॥ तत्फलं लभते सम्यङ्नाम्नां दशशतीजपात् ॥ १५ ॥ यः शृणोति महाविद्यां श्रावयेद्वाऽपि भक्तितः ॥ सोऽपि मुक्तिमवाप्नोति यत्र गत्वा न शोचति ॥ १६ ॥ यक्षराक्षसवेतालग्रहकूष्मांडभैरवाः ॥ पठनादस्य नश्यन्ति जीवेच्च शरदां शतम् ॥ १७ ॥ ब्रह्महत्यादिपापानां नाशः स्याच्छ्रवणेन च ॥ किं पुनः पठनादस्य मुक्तिः स्यादनपायिनी ॥ १८ ॥ इत्युक्त्वा स महादेवो भगवान् परमेश्वरः ॥ पुनरप्याह भगवान्कृपया परया युतः ॥ १९ ॥ दीयतामात्म-भक्तेभ्यो यदुक्तं भवघातकम् ॥ इत्युक्त्वान्तर्दधे देवः परमानन्दरूपवान् ॥ २०० ॥ श्रीकृष्ण उवाच ॥ एतदेव पुरा रामो लब्धवान्कुम्भसंभवात् ॥

अरण्ये दण्डकाख्ये तु प्रजजाप रघूद्वहः ॥ १ ॥ नित्यं त्रिषवणस्नायी त्रिसन्ध्यं संस्मरञ्शिवम् ॥ तदासौ देवदेवोऽपि प्रत्यक्षं प्राह राघवम् ॥ २ ॥ इदं पाशुपतं दिव्यं प्रगृहाण रघूद्वह ॥ एतदासाद्य पौलस्त्यं जहि मा शोकमर्हसि ॥ ३ ॥ तदाप्रभृति भूः देवाः प्रजपामि सुभक्तितः ॥ गृह्णन्तु परया भक्त्या भवंतः सर्व एव हि ॥ ४ ॥ श्रीवेदव्यास उवाच ॥ ततस्ते ऋषयः सर्वेः जगृहुर्मुनिपुङ्गवाः ॥ सहस्रनामसद्दिव्यां भक्तियुक्तेन चेतसा ॥ ५ ॥ एतद्वः कथितं सर्वं हितार्थं मुनिसत्तमाः ॥ गृह्णन्तु मम वाक्येन मुक्तिं प्राप्स्यथ निश्चितम् ॥ ६ भवद्भिरात्मशिष्येभ्यो दीयतामिदमा-दरात् ॥ नाम्नां सहस्रमेतद्धि लिखितं यन्निकेतने ॥ ७ ॥ अविमुक्तं तु तद्गेहं तत्र तिष्ठति शङ्करः ॥ अनेन मंत्रितं भस्म दुष्टदुःखविघातकम्

॥ ८ ॥ पिशाचस्य विनाशाय जप्तव्यमिदमुत्तमम् ॥ नाम्नां तेन सहस्रेण समं किञ्चिन्न विद्यते ॥ २०१ ॥

इति श्रीअग्निपुराणे उत्तरखण्डे शङ्करसंहितायां श्री
कृष्णामार्कण्डेयसम्वादे वेदसाराख्यं परमदिव्यं
शिवसहस्रनामस्तोत्रं संपूर्णम् ।

श्रीगणेशाय नमः ॥ ॐ वंदे देवमुमानाथं तपस्विजनसम्पदम् ॥ विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् ॥ १ ॥ इति ध्यानम् ॥ अथ शिवाष्टोत्तरशतनामावलिः ॥ ॐ आत्मारामाय नित्याय कैवल्याय नमो नमः ॥ निरञ्जनाय बुद्धाय प्रसिद्धाय नमो नमः ॥ १ ॥ नमः ॐ कार-रूपाय चैतन्याय नमो नमः ॥ नमः स्वेच्छास्वरूपाय अघोराय नमो

नमः ॥ २ ॥ सिद्धेश्वराय सर्वाय अभयाय नमो नमः ॥ तत्पुरुषाय तीर्थाय निर्वाणाय नमो नमः ॥ ३ ॥ मृत्युञ्जयाय मंत्राय पवित्राय नमो नमः ॥ योगिने हंसनाथाय निधीशाय नमो नमः ॥ ४ ॥ गरिष्ठाय वरिष्ठाय धर्मिष्ठाय नमो नमः ॥ आद्याय निरवद्याय सर्वज्ञाय नमो नमः ॥५॥ सद्योजाताय वन्द्याय पालकाय नमो नमः ॥ कालान्तकाय काम्याय परमाय नमो नमः ॥६॥ ज्ञानगम्याय ज्ञानाय विरमाय नमो नमः ॥ जीवितेशाय शुद्धाय उदाराय नमो नमः ॥ ७ ॥ महारुद्राय दक्षाय विशिष्टाय नमो नमः ॥ व्यक्ताय कल्पवृक्षाय करुणाय नमो नमः ॥ ८ ॥ तत्त्वाधिकाराय तत्त्वाय अगणयाय नमो नमः ॥ तथ्याय नित्यतृप्ताय प्रसन्नाय नमो नमः ॥९॥ सत्यप्रियाय सत्याय चिदात्मने नमो नमः ॥ मुनिप्रिया-

य मुख्याय सुलभाय नमो नमः ॥१०॥ भक्तिगम्याय वीर्याय चिन्मात्राय नमो नमः ॥ नमः संसारपाराय शंकराय नमो नमः ॥ ११ ॥ नमः सत्यप्रतिज्ञाय सुहृदाय नमो नमः ॥ ध्यानगम्याय ध्येयाय ध्यानरूपाय ते नमः ॥१२॥ धर्माधाराय पुण्याय धर्मगोप्त्रे नमो नमः ॥ योगगम्याय योगाय निर्मलाय नमो नमः ॥ १३॥ शरणागतपालाय शरण्याय नमो नमः ॥ नारायणाय तीर्थाय यज्ञांगाय नमो नमः ॥ १४ ॥ अनवद्याय शास्त्राय स्वतंत्राय नमो नमः ॥ विश्वावासाय नग्नाय अद्वैताय नमो नमः ॥१५॥ ब्रह्मानन्दाय चिन्त्याय विचिन्त्याय नमो नमः॥सच्चिदानन्दरूपाय प्रमाणाय नमो नमः ॥ १६ ॥ निराकाराय देवाय रोचिष्णवे नमो नमः ॥ सदाशिवाय शान्ताय सर्वात्मने नमो नमः॥ १७ ॥ ज्योतिर्लिङ्गाय दीप्ताय

बीजस्थाय नमो नमः ॥ धर्मपीठाय चित्राय विचित्राय नमो नमः ॥१८॥ सोहंतत्वाय नित्याय सुदीक्षाय नमो नमः ॥ त्रिधावस्थाय मुख्याय क्षेत्रज्ञाय नमो नमः ॥ १९ ॥ श्रीमहादेव उवाच ॥ ब्रह्महत्यादिपापानां नाशः स्याच्छ्रवणेन च ॥ किं पुनः पठनादस्य मुक्तिः स्यादनपायिनी ॥ २० ॥ मत्समीपे प्रदोषे च स्पृष्ट्वा भक्त्या जपत्यथ ॥ जीवन्सरूपतां प्रेत्य सायुज्यं समवाप्नुयात् ॥ २१ ॥

इति श्रीपद्मपुराणे उत्तरखण्डे शंकरसंहितायां श्रीकृष्ण-
मार्कंडेयसंवादे वेदसाराख्यं परमदिव्यशिवसहस्रनाम
मध्यस्थमष्टाधिकशतनामावलीस्तोत्रं
संपूर्णम् ॥

श्रीगणेशाय नमः ॥ चांपेयगौरार्द्धशरीरकायै कर्पूरगौरार्धशरीरकाय ॥ धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥१॥ रणत्क्वणत्कङ्कणनूपुरायै मिलत्फणाभासुरनूपुराय ॥ हेमांगदायै भुजगांगदाय नमः शिवायै० ॥२॥ कस्तूरिकाकुंकुमचर्चितायै चितारजः पुञ्जविचर्चिताय ॥ सुकुण्डलायै फणिकुण्डलाय नमः शिवायै० ॥ ३ ॥ मन्दारमालाकुलितालकायै कपालमालांकितशेखराय ॥ दिव्याम्बरायै च दिगम्बराय नमः शिवा० ॥४॥ प्रोत्फुल्लनीलोत्पललोचनायै विकासपंकेरुहलोचनाय ॥ समेक्षणायै विषमेक्षणाय नमः शिवायै० ॥५॥ अम्भोरुहश्यामलकुन्तलायै तडित्प्रभाभासजटाधराय ॥ जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः

शिवाय॥६॥सदा शिवानां प्रियभूषणायै सदाशिवानां प्रियभूषणाय॥शिवान्वितायै च शिवान्विताय नमः शिवायै० ॥ ७ ॥ प्रपञ्चसृष्टेर्मुखवासदायै त्रैलोक्यसंहारकृतान्तकाय ॥ कृतस्मरायै विकृतस्मराय नमः शिवायै० ॥८॥ नमस्ते भगवद्रुद्रभास्करामिततेजसे ॥ नमो भवाय देवाय शिवाय परमात्मने ॥ ९ ॥ शान्ताय चितिरूपाय सदा सुरभिदे नमः ॥ ईशा नाय नमस्तुभ्यं स्पर्शमात्राय ते नमः ॥ १० ॥ महादेवाय सोमाय अमृतेशाय ते नमः ॥ उग्राय यजमानाय नमो मीढुष्टमाय ते ॥११॥ नमोऽस्तु ते शंकर शांतिमूर्ते नमास्तु ते चन्द्रकलावतंस ॥ नमोऽस्तु ते कारणकारणाय नमोऽस्तु ते कारणवर्जिताय ॥ १२ ॥ स एव धन्यस्तव भक्तिभाजां तवार्चको यः

कुरुते सदैव ॥१३॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ १४ ॥

॥ इति श्रीस्कन्दपुराणे शिवस्तुतिः सम्पूर्णा ॥

पं० माधवप्रसादव्यासेन संशोधिता ।

बाबू काशीप्रसाद भार्गव द्वारा—भार्गवभूषण प्रेस, गायघाट बनारस में मुद्रित ।

# अथ मूलरामायणप्रारंभः ॥

मूल्यं १ आणकः ।

श्रीगणेशाय नमः ॥ श्रीमते रामचन्द्राय नमः ॥ जयति रघुवंशतिलकः कौसल्याहृदयनंदनो रामः ॥ दशवदननिधनकारी दाशरथिः पुंडरीकाक्षः ॥१॥ कूजंतं रामरामेति मधुरं मधुराक्षरं ॥ आरुह्य कविताशाखां वंदे वाल्मीकिकोकिलम् ॥ २ ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ॥ शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ३ ॥ यः पिबन् सततं रामचरितामृतसागरम् ॥ अतृप्तस्तं मुनिं वंदे प्राचेतसमकल्मषम् ॥ ४ ॥ गोष्पदीकृतवारीशं मशकीकृतराक्षसम् ॥ रामायणमहामालारत्नं वंदेऽनिलात्मजम् ॥ ५ ॥ अंजनीनंदनं वीरं जानकीशोकनाशनम् ॥ कपीशमक्षहंतारं वंदे लंकाभयंकरम् ॥ ६ ॥ उल्लंघ्य सिंधोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ॥ आदाय तेनैव ददाह लंकां नमामि

तं प्राजलिरांजनेयम् ॥ ७ ॥ मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ॥ वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ८ ॥ श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ॥ आजानुबाहुमरविंददलायताक्षं रामं निशाचरविनाशकरं नमामि ॥ ९ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे ॥ वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १० ॥ शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा ॥ स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ११ ॥ यः कर्णांजलिसंपुटैरहरहः सम्यक्पिबत्यादराद्वाल्मीकेर्वदनारविंदगलितं रामायणाख्यं मधु ॥ जन्मव्याधिजराविपत्तिमरणैरत्यंतसोपद्रवं संसारं स विहाय गच्छति पुमान् विष्णोः पदं शाश्वतम् ॥ १२ ॥ तदुपगतसमाससंधियोगं सममधुरप्रणतार्थवाक्यबद्धम् ॥ रघुवरच-

रितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १३ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकांजलिम् ॥ बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसांतकम् ॥ १४ ॥ वाल्मीकिगिरिसंभूता रामसागरगामिनी ॥ पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥ जितं भगवता तेन हरिणा लोकधारिणा ॥ अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥ १६ ॥ तपःस्वाध्यायनिरतं तपस्वी वाग्विदांवरम् ॥ नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १७ ॥ कोन्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान् ॥ धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ १८ ॥ चारित्रेण च को युक्तः सर्वभूतेषु को हितः ॥ विद्वान् कः कः समर्थश्च कश्चैकः प्रियदर्शनः ॥ १९ ॥ आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ॥ कस्य बिभ्यति

मूल ॥२॥

देवाश्च जातरोषस्य संयुगे ॥ २० ॥ एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ महर्षे त्वं समर्थोसि ज्ञातुमेवंविधं नरम् ॥ २१ ॥ श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ॥ श्रूयतामिति चामंत्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ २२ ॥ बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ॥ मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ २३ ॥ इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ॥ नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ २४ ॥ बुद्धिमान्नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ॥ विपुलांसो महाबाहुः कंबुग्रीवो महाहनुः ॥ २५ ॥ महोरस्को महेष्वासो गूढजत्रुररिंदमः ॥ आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ २६ ॥ समः समविभक्तांगः स्निग्धवर्णः प्रतापवान् ॥ पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्ष-

रा. ॥२॥

णः॥ २७ ॥ धर्मज्ञः सत्यसंधश्च प्रजानां च हिते रतः ॥ यश-
स्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान् ॥ २८ ॥ प्रजापति-
समः श्रीमान् धाता रिपुनिषूदनः ॥ रक्षिता जीवलोकस्य
धर्मस्य परिरक्षिता ॥ २९ ॥ रक्षिता स्वस्य धर्मस्य स्वजनस्य
च रक्षिता ॥ वेदवेदांगतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ ३० ॥
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ॥ सर्वलोकप्रियः
साधुरदीनात्मा विचक्षणः ॥ ३१ ॥ सर्वदाऽभिगतः सद्भिः समुद्र
इव सिंधुभिः ॥ आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ ३२ ॥
स च सर्वगुणोपेतः कौसल्यानंदवर्धनः ॥ समुद्र इव गांभीर्ये
धैर्येण हिमवानिव ॥ ३३ ॥ विष्णुना सदृशो वीर्ये सोमवत्प्रि-
यदर्शनः ॥ कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ ३४ ॥
धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥ तमेवंगुणसंपन्नं रामं

सत्यपराक्रमम् ॥३५॥ ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतं ॥ प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ ३६ ॥ यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ॥ तस्याभिषेकसंभारान् दृष्ट्वा भार्याथ कैकयी ॥ ३७ ॥ पूर्वं दत्तवरा देवी वरमेनमयाचत ॥ विवासनं च रामस्य भरतस्याभिषेचनम् ॥ ३८ ॥ स सत्यवचनाद्राजा धर्मपाशेन संयतः ॥ विवासयामास सुतं रामं दशरथः प्रियम् ॥ ३९ ॥ स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ॥ पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥४०॥ तं व्रजंतं प्रियो भ्राता लक्ष्मणोऽनुजगामह ॥ स्नेहाद्विनयसंपन्नः सुमित्रानंदवर्धनः ॥ ४१ ॥ भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ ४२ ॥ जनकस्य कुले जाता देवमायेव निर्मिता ॥ सर्वलक्षण-

संपन्ना नारीणामुत्तमा वधूः ॥ ४३ ॥ सीताप्यनुगता रामं शशिनं रोहिणी यथा ॥ पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ ४४ ॥ शृंगवेरपुरे सूतं गंगाकूले व्यसर्जयत् ॥ गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ ४५ ॥ गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥ ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः॥४६॥चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ॥ रम्य-मावसथं कृत्वा रममाणा वने त्रयः ॥ ४७ ॥ देवगंधर्वसंकाशा-स्तत्र ते न्यवसन् सुखम् ॥ चित्रकूटं गते रामे पुत्रशोकातुर-स्तदा ॥ ४८ ॥ राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ॥ गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ४९ ॥ नियुज्य-मानो राज्याय नैच्छद्राज्यं महाबलः ॥ स जगाम वनं वीरो रामपादप्रसादकः ॥ ५० ॥ गत्वा तु स महात्मानं रामं सत्यप-

राक्रमम् ॥ अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥५१॥ त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ॥ रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥५२॥ न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः ॥ पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ॥ ५३ ॥ निवर्तयामास ततो भरतं भरताग्रजः ॥ स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ५४ ॥ नंदिग्रामेऽकरोद्राज्यं रामागमनकांक्षया ॥ गते तु भरते श्रीमान् सत्यसंधो जितेंद्रियः ॥५५॥ रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥ तत्रागमनमेकाग्रो दंडकान् प्रविवेश ह ॥ ५६ ॥ प्रविश्य तु महारण्यं रामो राजीवलोचनः ॥ विराधं राक्षसं हत्वा शरभंगं ददर्श ह ॥ ५७ ॥ सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ अगस्त्यवचनाच्चैव जग्राहैंद्रं शरासनम् ॥ ५८ ॥ खड्गं

च परमप्रीतस्तूणी चाक्षय्यसायकौ ॥ वसतस्तस्य रामस्य वने वनचरैः सह ॥ ५९ ॥ ऋषयोऽभ्यगमन्सर्वे वधायासुररक्षसां ॥ स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥ ६० ॥ प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ॥ ऋषीणामग्निकल्पानां दंडकारण्यवासिनाम् ॥ ६१ ॥ तेन तत्रैव वसता जनस्थाननिवासिनी ॥ विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ६२ ॥ ततः शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् ॥ खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ ६३ ॥ निजघान रणे रामस्तेषां चैव पदानुगान् ॥ वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ ६४ ॥ रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ॥ ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः ॥ ६५ ॥ सहायं वरयामास मारीचं नाम राक्षसम् ॥ वार्यमाणः सुबहुशो मारीचेन

स रावणः ॥ ६६ ॥ न विरोधो बलवता क्षमो रावण तेन ते ॥ अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ६७ ॥ जगाम सह मारीचस्तस्याश्रमपदं तदा ॥ तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ६८ ॥ जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ ६९ ॥ राघवः शोकसंतप्तो विललापाकुलेंद्रियः ॥ ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ७० ॥ मार्गमाणो वने सीतां राक्षसं संददर्श ह ॥ कबंधं नाम रूपेण विकृतं घोरदर्शनम् ॥ ७१ ॥ तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ॥ स चास्मै कथयामास शबरीं धर्मचारिणीम् ॥ ७२ ॥ श्रमणां धर्मनिपुणामभिगच्छेति राघव ॥ सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ ७३ ॥ शबर्या पूजितः सम्यग्रामो

दशरथात्मजः ॥ पंपातीरे हनुमता संगतो वानरेण ह ॥ ७४ ॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ सुग्रीवाय च तत्सर्वं
शंसद्रामो महाबलः ॥ ७५ ॥ आदितस्तद्यथावृत्तं सीतायाश्च
विशेषतः ॥ सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥७६॥
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥ ततो वानरराजेन वैरानुकथनं प्रति ॥ ७७ ॥ रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥७८॥
वालिनश्च बलं तत्र कथयामास वानरः ॥ सुग्रीवः शंकितश्चासीन्नित्यं वीर्येण राघवे ॥ ७९ ॥ राघवप्रत्ययार्थं तु दुंदुभेः कायमुत्तमम् ॥ दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥८०॥
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ॥ पादांगुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ ८१ ॥ बिभेद च पुनस्तालान्

सप्तैकेन महेषुणा ॥ गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥ ८२ ॥ ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ॥ किष्किंधां रामसहितो जगाम च गुहां तदा ॥ ८३ ॥ ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिंगलः ॥ तेन नादेन महता निर्जगाम हरीश्वरः ॥८४॥ अनुमान्य तदा तारां सुग्रीवेण समागतः ॥ निजघान च तत्रैव शरेणैकेन राघवः ॥ ८५ ॥ ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ॥ सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ८६ ॥ स च सर्वान्समानीय वानरान् वानरर्षभः ॥ दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ८७ ॥ ततो गृध्रस्य वचनात्संपातेर्हनुमान् बली ॥ शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ८८ ॥ तत्र लंकां समासाद्य पुरीं रावणपालिताम् ॥ ददर्श सीतां ध्यायंतीमशोकवनिकागताम् ॥ ८९ ॥

निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य च ॥ समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ९० ॥ पंच सेनाग्रगान् हत्वा सप्त मंत्रिसुतानपि ॥ शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ९१ ॥ अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ॥ मर्षयन् राक्षसान्वीरो मंत्रिणस्तान् यदृच्छया ॥ ९२ ॥ ततो दग्ध्वा पुरीं लंकामृते सीतां च मैथिलीम् ॥ रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ९३ ॥ सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ॥ न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ९४ ॥ ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ॥ समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ९५ ॥ दर्शयामास चात्मानं समुद्रः सरितांपतिः ॥ समुद्रवचनाच्चैव नलः सेतुमकारयत् ॥ ९६ ॥ तेन गत्वा पुरीं लंकां हत्वा रावणमाहवे ॥

रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ९७ ॥ तामुवाच ततो रामः परुषं जनसंसदि ॥ अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ९८ ॥ ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ॥ कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥ ९९ ॥ सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥ १०० ॥ अभिषिच्य च लंकायां राक्षसेंद्रं विभीषणम् ॥ कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥१०१॥ देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ॥ अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ १०२ ॥ भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ॥ भरतस्यांतिके रामो हनूमंतं व्यसर्जयत् ॥ १०३ ॥ पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा ॥ पुष्पकं तत्समारुह्य नंदिग्रामं ययौ तदा ॥ १०४ ॥ नंदिग्रामे

जटां हित्वा भ्रातृभिः सहितोऽनघः ॥ रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ १०५ ॥ हृष्टः प्रमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ॥ निरामयो ह्यरोगश्च दुर्भिक्ष भयवर्जितः ॥ १०६ ॥ न पुत्रमरणं केचिद्द्रक्ष्यंति पुरुषाः क्वचित् ॥ नार्यश्चाविधवा नित्यं भविष्यंति पतिव्रताः ॥ १०७ ॥ न चाग्निजं भयं किंचिन्नाप्सु मज्जंति जंतवः ॥ न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥ १०८ ॥ न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥ नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ १०९ ॥ नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ११० ॥ गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् ॥ असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ १११ ॥ राजवंशान् शतगुणान् स्थापयिष्यति राघवः ॥

चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥ ११२ ॥ दशवर्षसहस्राणि दशवर्षशतानि च ॥ रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ ११३ ॥ इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् ॥ यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ११४ ॥ एतदाख्यानमायुष्यं पठन्रामायणं नरः ॥ सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥११५॥ पठन् द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात् ॥ वणिग्जनः पुण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥११६॥ चरितं रघुनाथस्य शतकोटिप्रविस्तरं ॥ एकैकमक्षरं पुंसां महापातकनाशनम् ॥११७॥ रामाय रामभद्राय रामचंद्राय वेधसे ॥ रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ११८ ॥ इति श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकांडे नारदोक्तरामायणसंक्षेपो नाम सर्गः ॥१॥

इदं पुस्तकं मुंबय्यां निर्णयसागराख्यमुद्रालयाधिपतिना मुद्रापितम्. शाके १८५८ सन १९३६.

माला का द्वितीय कमल

# श्रीसूक्त

और

# आदित्यहृदय स्तोत्र


संग्रहकर्ता और अनुवादक

**कमला**



प्रकाशक—

तुलसी मीमांसा परिषद्, भदैनी, काशी।

मुद्रक—

**पं० पद्मनारायण आचार्य**

पद्म प्रेस, बांसफाटक, काशी।

प्रथमावृत्ति १००० ] सन् १९४० [ मूल्य =)

विषय सूची—

| | पृष्ठ |
|---|---|


—:❀:❀:—

# भूमिका

## पाठ करने की विधि

१. शरीर, मन और वाणी—तीनों की पवित्रता से ही कोई भी पुण्य अनुष्ठान और पाठ सिद्ध होता है।

( क ) शरीर की पवित्रता के लिए यदि कभी पूर्ण स्नान न हो सके तो मंत्र स्नान कर लेना चाहिए। इसका मंत्र—

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरो शुचिः। ॐ विष्णवे नमः। ॐ विष्णवे नमः। ॐ विष्णवे नमः।

( ख ) मन को पवित्र करने के लिए संकल्प लेकर पाठ प्रारंभ करना चाहिए।

ॐ अद्य अमुकगोत्रः अमुकशर्माऽहं अमुककार्यसिद्ध्यर्थं ( अथवा परमेश्वरप्रीत्यर्थं ) अमुकपाठं करिष्ये। संकल्प की दूसरी विधि भी है जिसमें ॐ तत्सत् अद्य······रहता है।

और तीसरी तो वही लंबी विधि है जिसमें ॐ विष्णुर्विष्णुर्विष्णुः श्री श्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे अस्मिन् बौद्धावतारे जम्बूद्वीपे इत्यादि रहता है।

तीनों प्रकार के संकल्पों में से जिसे जो रुचे वही पढ़ें और कार्य करें। लाभ तीनों से होता है।

( ग ) वाणी की पवित्रता आती है मौन से। जो लोग मौन रहकर पाठ करते हैं उन्हें सूक्त अथवा स्तोत्र का पूरा फल मिलता है।

पाठ अथवा किसी भी प्रकार के पुण्य कार्य के सिद्ध करने के लिए एक बात समझ लेना चाहिए—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥

जो अपना आहार, विहार, कर्म, सोना जागना आदि सभी कुछ ठीक समय पर ठीक ढंग से करता है उसी की साधना दुःख दूर करती है। इसलिए पाठ पूजा और भोजन का यदि समय ठीक हो जाय तो मनुष्य का जीवन बन जाय। यह भगवान् कृष्ण, हमारे पुराने आचार्य और आजकल के अनुभवी लोगों की पक्की सलाह है।

अन्तमें सबसे बड़ी बात यह है कि जितना अधिक मनुष्य सत्य का पालन करता है उतना ही सफल वह अपने पाठपूजन में होता है।

सच्ची शक्ति कैसे मिलती है और सच्ची पवित्रता किसे कहते हैं इसे गीता ( के १८ वें अध्याय से ) अथवा मनोनीत गुरु से समझ लेना चाहिए।

---

## अथ श्रीसूक्तम् ।

**ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥**

हे जातवेदा ( अग्निदेव ) तुम सब जानते हो, मेरे लिए वह हिरण्मयी ( सोने की ) लक्ष्मी ला दो ( बुला दो )—वह सोने के वर्ण वाली हरिणी, वह सोने और चांदे की माला वाली, ( चन्द्रमा जैसी प्यारी और अपनी आभा से चमचमाती हुई ) चन्द्रा को मेरे पास बुला दो ॥ १ ॥

**तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।**
**यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥**

उस को अच्छी तरह मेरे पास तक पहुंचा दो, हे जातवेदा, तुम्हारे वशमें तो सभी कुछ है दुनियां का सारा धन दौलत तुम्हारा ही तो है । तुम ऐसा करो कि वह लक्ष्मी मेरे यहां स्थिर होजाय कहीं जाये न जिससे कि मैं सोना, गाय, घोड़ा और आदमी ( सभी कुछ ) पा सकूं ॥ २ ॥

**अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।**
**श्रियं देवीमुपह्वये श्री र्मा देवीजुषताम् ॥ ३ ॥**

जो श्री आगे आगे घोड़ों पर, बीचमें रथों पर और पीछे पीछे हाथियों पर उनके जयनाद का प्रबोधन करती हुई विजय यात्रा करती है, ( साहसियों का युद्धमें साथ देती है, ) उसी देवी को मैं बुला रहा हूं । देवीजी मुझपर कृपा करें, मेरे यहां आवें ॥ ३ ॥

**कां सोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।**
**पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥**

उस (का) सुख स्वरूपा श्री को वही (सुखहीन) मैं यहां बुला रहा हूँ। उसकी चारदीवाली तक सोनेकी है। उसका हृदय भी आर्द्र है पर अपने तेजसे वह सदा जलती रहती है। वह स्वयं सब बातों से तृप्त रहती है पर दूसरों को तृप्त करने में सदा लगी रहती है। वह पद्म में बैठा करती है (पद्म ही उसका आसन है।) वह स्वयं भी देखने सुनने में रूप रंग में एक पद्म के समान है ॥ ४ ॥

**चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।**
**तां पद्मनेमीं शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥**

उस चन्द्रा को जो अपनी सुनहली छवि से प्रकाशित रहती है, जो अपने यश से सदा उज्वल देख पड़ती है, जो लोक के सभी दैवी स्वभाव वाले लोगोंपर कृपा करती है (उनकी सेवा करती है) और जो बड़ी उदार भी है उसी पद्मिनी की शरण में मैं जा रहा हूँ। मेरी अलक्ष्मी का नाश हो जाय। लक्ष्मीजी, अब तो मैंने तुम्हें वर लिया है ॥ ५ ॥

**आदित्यवर्णे तपसोऽधिजातो वनपतिस्तव वृक्षोऽथ बिल्वः।**
**तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्याऽअलक्ष्मीः ६**

हे आदित्य के समान (सुनहले) वर्ण वाली, (जीवनमें सांझ सवेरेका रंग दिखानेवाली), यह तपसे उत्पन्न वनस्पति (संसार रूपी वृक्ष) तुम्हारा यह बेलका वृक्ष है। उसके फल (अर्थात् श्री फल) तपसे मायाके विघ्नों और बाहरी दारिद्र्यके दुःखोंको दूर भगा दें ॥ ६ ॥

**उपैतु मां देवसखः कीर्तिश्च मणिना सह।**
**प्रादुर्भूतो सुराष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥ ७ ॥**

देवों के सखा (विष्णु) मेरे यहां आवें। कीर्ति भी

मणि के साथ आवे। वह इस सुराष्ट्रमें उत्पन्न होकर मुझे कीर्ति और ऋद्धि दोनों प्रदान करें ॥ ७ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीनाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥

भूख और प्यास के दुःखों वाली जेठी अलक्ष्मी का मैं अब नाश कर रहा हूं। आप अभूति और असमृद्धि सभी को मेरे घर से भगा दीजिए ॥ ८ ॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥

[ शब्दों की टिप्पणी पूरे सूक्तके अन्तमें देखिए ]

आप का द्वार है गन्ध, आपको दबा सकना बड़ा कठिन है, आप सदा ही बढ़ती रहती है, आप करसी ( और कूड़ा कर्कट ) में भी रह सकती हैं, ( वहां भी अपने भाई अग्नि देव के समान चमकती रहती हैं )। आप सभी जड़ चेतन की मालकिन जो हैं उन्हीं आपको मैं यहाँ बुला रहा हूँ ॥ ९ ॥

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनांरूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

मन का काम और आकूति तथा वाणी का सत्य मुझे मिले पशुओं का रूप और अन्न की श्री मेरे घर रहे; और यश भी मेरे साथ रहे ॥ १० ॥

कर्दमेन प्रजा भूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥

[ शब्दों का अर्थ पीछे ]

कर्दम ( १ प्रजापति २ कीचड़ ) से सचराचर प्रजा उत्पन्न हुई

है, मेरे यहां, हे कर्दम, तुम्हीं उत्पन्न हो जाओ ( अर्थात जिस प्रकार कर्दमने गृहस्थी की वृद्धि की उसी प्रकार मेरे यहां भी गृहस्थी की बढ़ती हो )। मेरे कुलमें पद्मकी माला वाली माता श्री को बसा दो ॥ ११ ॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥

(मेरी प्रार्थना है) आपो देवता (जल) स्निग्ध वस्तुओं की सृष्टि करें। और हे आर्द्र ( दयार्द्र देव ) मेरे घरमें तुम बस जाओ। मेरे कुलमें माता श्री देवी का निवास करा दो ॥ १२ ॥

आर्द्रां पुष्करिणीं पुष्टां पिङ्गलां (सुवर्णां हेम) पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १३ ॥

हे जातवेद मेरे लिए उन स्वर्णमयी लक्ष्मी का आवाहन कर दो जो आर्द्र है, पुष्कर वाली है, पुष्ट है, पिङ्गल है, पद्ममालिनी और चन्द्रा हैं ॥ १३ ॥

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥

हे जातवेदा ( अग्नि ) उस आर्द्रा करिणी को, उस सुवर्ण यष्टि, हेममालिनी सूर्या, हिरण्यमी लक्ष्मी को ले आइए ॥ १४ ॥

तांमआवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतंगावो दास्योऽश्वाविदेयं पुरुषानहम् ॥१५॥

उस लक्ष्मीको मेरे यहां ले आइए जो कभी कुमार्ग में न जावे और जिसमें मुझे सोना, गाय, दासी, घोड़ा और पुरुष बहुत मिलें ॥ १५ ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ १६ ॥

जो तनसे साफ और मनसे शुद्ध होकर नित्य घी का हवन करता है और श्री की कामनासे इस पन्द्रह ऋचाके सूक्तका सतत जप करता है ( वह श्री को पा जाता है । ) ॥ १६ ॥

इति श्रीसूक्तं समाप्तम् ।

---

## अथ लक्ष्मीसूक्तम् ।

सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥१॥

कमल ( के घर ) में रहने वाली, हाथ में कमल रखनेवाली खूब रेशमी साड़ी पहनने वाली, गन्ध और माला से शोभित हे भगवति तुम विष्णुकी प्यारी हो, सबके मनको प्यारी लगनेवाली हो, तीनो लोकोंको सुख संपत्ति उत्पन्न करनेवाली हो, मेरे ऊपर कृपाकरो ।१।

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिंद्रो बृहस्पतिर्वरुणं धनमस्तु मे ॥ २ ॥

अग्नि मेरा धन हो ( अर्थात मुझे धन देवें ), वायु मेरा धन हो, सूर्य मेरा धन हो, वसु मेरा धन हो, इन्द्र मेरा धन हो, बृहस्पति और वरुण भी मेरा धन हो । ( ये सबलोग अपनी अपनी विभूति मुझे देवें अर्थात् तेज गति, बुद्धि, रूप, बल, विद्या, व्रत आदि ) ।२।

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥ ३ ॥

हे गरुड सोम पीओ, इन्द्र भी सोम पीवें । मुझ सोम पिलाने

यदेतत्तत्त्वन्ते सकलमपि तत्त्वेन विदितं
न तत्तत्त्वं तत्त्वं विदितमपि तत्त्वेन विदितम्।
न चैतत्तत्त्वञ्चेन्नियतमपि तत्त्वं किमु भवे-
न्न ते तत्त्वं तत्त्वं तदपि च नमो वेद्य शिव ते ॥१४॥

ननु किमिदं किमस्य रूपं कथमिदमभूदस्य को हेतुः, इति न कदापि चिन्त्यचिन्त्यं धीमतां विश्वमित्यादि स्मृत्या सर्वस्य प्रपञ्चजातस्य जडरूपत्वात्कथमिह चैतन्यं विभाति इत्याह–यदेतदिति। एवन्तर्हि यस्य भासा सर्वमिदं विभातीत्यादिश्रुतेः। येन शब्दं रसं रूपं गन्धं जानासि राघव। तमात्मानं परं ब्रह्म जानीहि परमेश्वरमित्यादि-स्मृतेश्च यदेतच्छब्दस्पर्शादिविषयकं तत्त्वज्ञानं तत्सर्वं परब्रह्म-चैतन्याभासत्वेनैव विदितमित्यर्थः। नन्वस्तु शब्दस्पर्शादिविषयक-ज्ञानम्परब्रह्मैव, परन्तु शब्दाश्रयत्वेनाकाशादीनां पञ्चतत्त्वानां ब्रह्मातिरिक्तत्वन्तु भवत्येवेति नेत्याह–न चैतत्तत्त्वमिति। तथा चेह तथैव नम इत्येतत्किं नाम भवतो मतं न च शब्दगुणत्वाद्धै नास्य वन्ध्यासुताद्धिदेत्यादि पूर्वोक्तरीत्या न चैतदाकाशादिकं तत्त्वञ्चेत्तर्हि नियतत्वं किमु भवेदिति पर्य्यवसिते तवापि तत्त्वं निर्धर्मकत्वात्तदपि न जाने इति वेदवेद्यरूपाय शिवाय ते तुभ्यं नम इत्यर्थः॥ १४॥

## भावार्थः

हे शिव! यह जगत् कहां से आया और इसका रूप कौन है और आकाशादि जो पांच तत्त्व हैं, सो वे जड़ हैं। आपका जो तत्त्व है, सो सब

तत्त्वों से विदित है । कोई ऐसा तत्त्व नहीं है, जो आपसे पृथक् हो । वस्तुतः सब तत्त्वरूप आप का तत्त्व है और सब तत्त्व आपके भीतर हैं । अतः सब तत्त्वों से विहित अमरवरत्व आपको है । हे वेद्यरूप शिव ! आपको मैं नमस्कार करता हूँ ॥ १४ ॥

इदं रूपं रूपं सदसदमलं रूपमिति चेन्न
जाने रूपं तत्तरतमविभिन्नं परतरम् ।
यतो नान्यद्रूपं नियतमपि वेदैर्न्निगदितं
न जाने सर्वात्मन्क्वचिदपि नमोऽनन्त शिव ते ॥ १५ ॥

ननु यदि सर्व्वं सर्वत्र सर्व्वदेति न्यायेन सर्व्वं खल्विदं ब्रह्मैकमस्ति चेत्किमिदं विश्वरूपं विभातीति तत्राह—इदं रूपमिति । तत्रेत्थं सति इदं यदि सदसतोः कार्य्यकारणयोर्जगतो रूपमेव रूपञ्चेत्तर्ह्यमलम्ब्रह्मस्वरूपं किमिति चेन्न जाने तरतमविभिन्नं परतरं रूपं किमस्तीत्यर्थः। ननु तर्हि केन प्रबलेन रूपेणेदं जगद्रूपवद्भातीति चेत्तत्राह—यत इति । एवं सति-वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । तथा वशी सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्चेत्यादि श्रुत्या तथा योग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमोस्त्व-ग्नये इति ऋग्वेदश्रुत्या, यतो भवतो नान्यत्पृथग्रूपं नियतमपि वेदैर्निगदितमपि तथापि न जाने हेसर्वात्मन् ! क्वचिदपि अनन्त-रूपाय शिवाय ते तुभ्यं नम इत्यर्थः ॥ १५ ॥

## भावार्थः ।

हे शिव ! आपका यह रूप सत् असत् दोनों रूप में है। दोनों से विहीन परतर परात्पर रूपको मैं नहीं जानता कि किस रूप में है। और यह वेद भी आपको नहीं जानता। सर्वात्मा होकर आप सब रूपों में वर्तमान हैं। सब रूपों से परे विलक्षण रूप आपका है और आप अनन्त रूप हैं। अतः आप को मैं नमस्कार करता हूं ॥ १५ ॥

महद्भूतं भूतं भवति च न भूतं तव विभो
यदा भूतं भूतं किमु न भवतो भूतविषयैः ।
यदा भूतं भू तं भवति न च भूतं हि भवितु
प्रभाभूतं भूतं भवति हि नमो ज्येष्ठ शिव ते॥१६॥

ननु यथा सतो जनिर्नैवमसतोपि जनिर्न च, जन्यत्वमेव जन्यस्यानिर्व्वाच्यत्वं समर्प्य यद्वयमित्यादि स्मृत्युक्तयायेन विरुद्धधर्मत्वात्कथं महद्भूतं प्रकृत्यादिजगद्रूपं भूतमुत्पन्नम्भवति अथ च, यस्त्वदतिरिक्तं हेविभो ! भूतमुत्पन्नं यथोक्तरीत्या विरुद्ध· धर्मत्वान्न च नहि सम्भवतीति यदा च भूतं महदादिप्रकृतिजातं तमुत्पन्नं अतएव सद्रूपञ्चेत्तदा भवतो भूतविषयैश्च किमु विशेषः कोपि नेत्यर्थः। यदा भूतं महदादिकं सर्व्वं भूतमुत्पन्नम्भवति तदा यथोक्तरीत्या विरुद्धधर्मत्वान्न च नहि भूतं भवितुमर्हती· त्यर्थः। यतस्सर्व्वं सर्व्वत्र सर्वदेति न्यायेन सर्वं खल्विदं ब्रह्मेत्यादि श्रुत्या च सर्वं प्रपञ्चजातं तव प्रभाभूतमेवमस्तीति, नमो ज्येष्ठाय

नमः श्रेष्ठाय चेत्यादि श्रुत्या ज्येष्ठरूपाय शिवाय ते तुभ्यं नम इत्यर्थः ॥ १६ ॥

## भावार्थः ।

हे शिव ! आप महदादि पञ्चभूत सम्भूत हैं तथा पञ्चभूत आप ही से सम्भूत हैं और पञ्चभूतों के विषय में आप हैं तथा मृगजलवत् पञ्चभूतों से परे प्रभाभूत आप हैं। सर्वभूतमय और सर्वभूतों से परे ज्येष्ठश्रेष्ठरूपमय आपको मैं बारम्बार नमस्कार करता हूं ॥ १६ ॥

वशीभूता भूतास्सततमपि भूतात्मकतया
न ते भूता भूतास्तव यदपि भूता विभुतया।
यतो भूता भूतास्तव तु नहि भूतात्मकतया
न वा भूता भूताःक्वचिदपि नमो भूत शिव ते ॥ १७॥

ननु ब्रह्मादितृणपर्य्यन्तं स्तब्धीभूतं जगत्त्रयं। केनाविनाशिता किम्वो स्वरूपं तद्विभावयेत्याशङ्काम्परिहरन्नाह—वशीभूता इति। एवन्तर्हि, "भीषास्माद्वातः पवते भीषोदयति सूर्य्यः भयादग्निश्च वायुश्च मृत्युर्धावति पञ्चमः" इति श्रुत्या तथा, यत्प्रेरितः प्रकुरुते जन्मनानाप्रकारकमित्यादि स्मृत्या सततमिति निश्चयेन भूताः प्राणिनस्त्वद्वशीभूता एवेत्यर्थः, वस्तुतस्तु—धारयिष्यति ते वेगं रुद्र-स्त्वात्मा शरीरिणां। यस्मिन्नोतमिदं प्रोतं विश्वं साटीव तन्तुष्वित्या-दिस्मृतिन्यायेन भूतात्मकस्यैव त्वं विष्ठसीति न ते भूताः प्राणिनः पृथग्भूता यदपि पृथग्भासन्ते तदपि त्वद्विभूत्यैव त्वन्माययैव

भासन्ते इत्यर्थः। यथोक्तम्—जीवः शिवः शिवो जीवः स जीवः केवलः शिवः। पाशबद्धस्तथा जीवः पाशमुक्तः सदाशिव इति श्रुत्या ज्ञातव्यम् यतश्च तव त्वन्तस्तु भूताः प्राणिनो भूता रज्जुसर्पादिवन्मृगजलादिवच्च जाता अपि नहि भूतात्मकतया त्वं निस्सङ्गत्वाद्भासत इति न-वा भूताः प्राणिनो भूतात्मकतया क्वचिदपि वस्तुतो भासन्त इति हे शिव ! तवाधिष्ठानसत्तया भूतरूपाय ते तुभ्यं नम इत्यर्थः ॥१७॥

## भावार्थः।

हे भूतनाथ शिव ! पांचों भूत आपके वशीभूत हैं। आप भूतमय हैं और भूतों से रहित तथा भूतों से परे हैं। सर्वभूतमय होने से आप भूतात्मा हैं। मन-वचन के अगम्य होने से आप अभूत हैं और कदाचित् भूतरूप भी हैं। अतः हे भूतरूप शिव ! आपको मैं नमस्कार करता हूं ॥ १७ ॥

न ते माया माया सततमपि मायामयतया
ध्रुवं माया माया त्वयि वर न मायामयमपि।
यदा मायामाया त्वयि न खलु मायामयतया
न माया माया वा परमयमतस्ते शिव नमः ॥१८॥

नन्वेवमपि मायान्तु प्रकृतिम्विद्यान्मायिनन्तु महेश्वरम्। तस्यावयवभूतेन व्याप्तं सर्वमिदं जगदित्यादिश्रुत्या परब्रह्मणस्सदाशिवस्य मायासबलत्वमेव किं न स्यादिति चेन्नेत्याह—न ते मायेति। तत्रेत्थं सति-यदिदं दृश्यते किञ्चित्तन्नास्ति किमपि ध्रुवम्।

यथा गन्धर्वनगरं यथा वारि मरुस्थले इत्यादिस्मृत्या ते तव सदाशिवस्य वस्तुतो मायाभासो नास्त्येव तथापि मायामयतया त्वं सततमपि भाससे इत्यर्थः। वस्तुतस्तु ध्रुवं यथा स्यात्तथा हेवर! सर्वश्रेष्ठ! त्वयि विषये या माया सा भासमानाऽस्त्येवेति कृत्वा न मायामयमपि त्वमसीत्यर्थः। तत्रैवं सति यदा या माया सा भा नास्त्येव तर्हि नहि खल्विति निश्चयेन मायामयतया तव भानमिति या माया सा नास्त्येव तर्हि सदाशिवे त्वयि परमयत्वं स्वतःसिद्धमिति ते तुभ्यं हेशिव नम इत्यर्थः॥ १८॥

## भावार्थः।

माया प्रकृति है, मायी महेश्वर हैं और उन्हीं दोनों से सारा जगत व्याप्त है। इस स्मृतिप्रमाण से आप मायामय हैं। इस पर विष्णु भगवान् कहते हैं कि 'न ते माया' निरंतर माया में रत रहते हुए भी आप में माया नहीं है। आप में माया हैं, यह जो भ्रम है सो रज्जुसर्पवत् अथवा मृगजलवत् है। आप जो दृष्टिगोचर होते हैं सो जैसे स्वप्न में अनेक प्रकार की वस्तु देखने में आती है, जाग जाने पर कुछ नहीं रहता। उसी तरह आप में माया का आभास है। अतः हे शिव! आपको मैं नमस्कार करता हूं॥ १८॥

यदन्तस्सम्वेद्यं विदितमपि वेदैर्निगदितं
न वेद्यं वेद्यञ्चेन्नियतमपि वेद्यं न विदितम्।
तदेवेदं वेद्यं विदितमपि वेदान्तनिकरैः
कदा वेद्यं वेद्यं जितमतिनमोऽतर्क्यं शिव ते॥ १९॥

ननु त्वद्यात्रया सर्वगताहता ते ध्यानेन चेतः परताहता ते इत्यादिस्मृतिन्यायेन शिवज्ञानस्य दुर्घटत्वं मन्वान आह—यदन्त इति। एवन्तर्हि 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता। फलव्याप्य-त्वमेवास्य शास्त्रकृद्भिर्निराकृतमित्यादिस्मृत्या वृत्तिव्याप्त्या यदन्तः-स्सम्वेद्यमिति। विदितमपि फलव्याप्त्या वेदैर्न्न विदितमित्यर्थः। एवं सति, न प्रज्ञं नाप्रज्ञं प्रज्ञानघनमित्यादिश्रुतेर्न्न वेद्यं वेद्यञ्चे-द्विज्ञातारमेकेन विजानीयादिति श्रुतेर्न्नियतमपि परब्रह्मवेद्यं, वस्तुतो न विदितमित्यर्थः। तत्रैवंसति साक्षादपरोक्षाद्ब्रह्मेत्यादिश्रुतेस्तदेवेदं विदितमपि वेदान्तनिकरैर्व्वेद्यमिति रीत्या यदा त्वं वेद्यं ब्रह्म वेद्यञ्चे-त्तेन तं गदतीति जगदिति हे शिव अतर्क्यरूपाय ते तुभ्यं नम इत्यर्थः ॥१६॥

## भावार्थः ।

आपको यात्रा से प्रसन्न करें तो सर्वज्ञत्व की हानि होती है। यदि ध्यान और स्तुति से प्रसन्न करें तो व्यापकत्व की हानि होती है। अतः अन्तः-करण से आप वेद्य हैं, ऐसा वेद कहता है। परन्तु वेद्य-अवेद्य दोनों से रहित आपको वेदान्त कहता है। अष्टाङ्ग योग द्वारा ध्यान से सब योगी आपको वेद्य कहते हैं। इस वेद्य-अवेद्य के झगड़े में पड़कर हमारी बुद्धि कुण्ठित हो जाती है और तर्क नष्ट हो जाते हैं। अतः हे अतर्क्य शिव! आपको मैं नमस्कार करता हूं ॥ १९ ॥

शिवं शैवं भावं शिवमपि शिवाकारमशिवं
न सत्यं शैवन्तच्छिवमिति शिवं शैवमनिशम् ।

शिवं शान्तं मत्वा शिवपरमतत्त्वं शिवमयं
न जाने तत्तत्त्वं शिवमिति नमो भेद्य शिवते ॥२०॥

नन्वशिवस्तु शिवो न स्याच्छिवो वै त्वशिवो नहि। तस्माच्छैवेन रूपेण शिवो वेदैर्निगद्यते॥ इति स्मृत्या शिवस्य सर्वव्यापकत्वमाह—शिवं शैवं भावमिति। शिशब्दो मङ्गलार्थस्तु वकारो दातृवाचकः। मङ्गलानाम्प्रदाता यः स शिवः परिकीर्तितः॥ इति स्मृत्या तथा सर्वं शिवमयं जगत्, शिवादन्यं न किञ्चन इति स्मृत्यापि सर्वेषु उच्चावचेषु शुद्धाशुद्धेषु सर्वभेदभिन्नेषु जगद्वस्तुषु व्याप्याधितिष्ठतस्तुभ्यं नमो नम इत्यर्थः। शिवं शान्तमिति। परात्परतरं मत्वा शिवं शान्तं सनातनं। सर्वं जगद्यस्य रूपं शिवाद्भिन्नं न किञ्चन इति स्मृत्या परतत्वं योगिभिर्ध्येयमिति सिद्धम्। तथा पाद्मे लक्ष्मीम्प्रति विष्णुवाक्यम्—अहं शिवः शिवश्चायं त्वञ्चापि शिव एव च। सर्वं शिवमयं भद्रे शिवाद्भिन्नं न किञ्चन॥ इति स्मृत्या परात्परतरं शान्तं सर्वंजगन्मयं शिवं मत्वा भेद्यरूपाय नमो नम इत्यर्थः॥२०॥

## भावार्थः।

अशिव शिव नहीं और शिव अशिव नहीं है। जिनको वेद शिव शांत और परमतत्त्व कहते हैं। शुद्धाशुद्ध, उच्च-नीच सबमें व्यापक होकर आप रहते हैं। पद्मपुराण में लक्ष्मी के प्रति विष्णु भगवान् का भी वचन है कि हम शिव, तुम शिव और यह जगत् भी शिव हैं। शिवसे अन्य कुछ नहीं है 'शि' मंगल वाचक है 'व' देने के अर्थ में है। अर्थात् मंगल को देने वाला 'शिव' शब्द है। जगत् में कोई ऐसी वस्तु नहीं है, जो शिव

से भिन्न हो । अतः सब भेदाभेद, वस्तुओं में व्यापक हे शिव ! भेद्यरूप आप को मैं नमस्कार करता हूं ॥ २० ॥

यद्ज्ञात्वा तत्त्वं सकलमपि संसारपतितं
जगज्जन्माद्यर्त्तिं वहति सततं दुःखनिलयम् ।
यदेतद्ज्ञात्वैव वहति च निवृत्तिम्परतरां
न जाने तत्तत्त्वं परमिति नमो रेष्य शिव ते ॥ २१ ॥

तथा च शिवं अज्ञात्वा जन्ममरणादिरूपं दुःखं न त्यजति, तदुक्तम्–यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यतीति स्मृत्योक्तमर्थमाह—यदज्ञात्वेति। शिवं अज्ञात्वा जन्ममरणादिरूपं दुःखं वहति तथा तद्ज्ञानेन परतरां शान्ति लभते यथा, विना शिवप्रसादं हि भ्रान्तिः कापि न नश्यति । अतएव भ्रमन्त्येते भ्रमराशिशववर्जिताः॥ इति स्मृत्या तथा यदक्षरम्परं ब्रह्म शिवं शान्तं निरामयमित्यादिश्रुत्या अवगंतव्यम् । संसारेस्मिन्किमपि वस्तुजातं शिवादन्यन्नास्ति सर्वं शिवमयं जगदित्यादि स्मृत्या हे रेष्य शिव ! तुभ्यं नमः इत्यर्थः ॥ २१ ॥

## भावार्थः ।

चामसे आकाश को मढ़देना सम्भव है, परन्तु बिना आप को जाने दुःख का अन्त होना सम्भव नहीं है । इस स्मृति का भावार्थ कहते हैं कि जिस परम तत्त्वको नहीं जानने से यह जगत् जन्म-मरणादि अनेक दुःखों को बार बार सहन करता है । जो आप का परम तत्त्व जान लेते हैं वे शान्ति

को प्राप्त होते हैं। जैसे कि स्मृति में कहा है कि बिना शिव के प्रसाद के भ्रान्ति नष्ट नहीं होती। अतः शिव में भ्रम नहीं है। इस जगत् में कोई वस्तु ऐसी नहीं है जो आपसे भिन्न हो। सब में सूक्ष्म रेखारूप से आप वर्तमान हैं। अतः हे रेष्य शिव! आप को मैं नमस्कार करता हूं॥ २१॥

तदेवेदं रूपं निगमविषयं मङ्गलकरं
न दृष्टं केनापि ध्रुवमिति विजाने शिव विभो।
ततोऽस्मिंस्ते शम्भो नहि मम विषादोऽप्यविकृतिः
प्रयत्नाल्लोभेस्मिन्न किमपि नमः पूर्ण शिव ते ॥२२॥

ननु वेदवेद्ये शिवैकत्वे ब्रह्मेत्याहुर्नपुंसकमित्यादिस्मृत्या सर्वं मङ्गलकर्तृत्वं शिवस्यैवेत्यत आह—तदेवेति। कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्। मानवः शिवयोगेन शिवो भवति निश्चितमिति स्मृत्या तथा च नामरूपात्मकं सर्वं शिवशक्त्यात्मकं जगदित्यादि स्मृत्यापि सर्वविश्वमयस्त्वमेवासि परन्तु यथार्थतया तव रूपं निश्चयेन कोपि न जानाति इत्यहं जाने, नभः परं स्वात्मसमम्पतत्रिणो न पारमीयुर्गतिमत्सु तद्वदित्यर्थो विचार्य्य मम चित्ते विषादो नास्ति। यन्नेति नेतीत्यतदुत्सिसृत्त्ववेति स्मृत्या निषेधमुखेन वेदोपि कथयति—हे पूर्णरूपशिव ते तुभ्यं नम इत्यर्थः॥ २२॥

## भावार्थः।

वेद से वेद्य और सब प्रकार का मंगल देने वाला आपका रूप है, परंतु आप के रूप को किसी ने ठीक तौर से नहीं जाना और आपकी महिमा के

पार कोई नहीं गया । जैसे आकाश में पक्षी उड़ते हैं, परन्तु आकाश का अन्त किसी ने नहीं पाया, अपने-अपने बलके माफिक उड़ते हैं । उसी तरह आप का अन्त किसी ने नहीं पाया । अतः हमारे चित्त में विषाद नहीं है। जब किसी ने आप का रूप निश्चय रूप से नहीं जाना और मैंने भी नहीं जाना तो आपके रूप को जानने का जो साहस मैं करता हूं, मेरे इस अपराध को आप क्षमा करें । हे पूर्णरूप शिव ! आपको मैं नमस्कार करता हूं ॥ २२ ॥

तवाकर्णं गूढं पदपरमचक्षुःश्रुतिपरं
तदेवाघस्सन्नयनपदवीं नात्र तनुते ।
कदाचित्किञ्चिद्वा स्फुरतु कृपया चेतसि तव
स्फुरद्रूपं भव्यं भव हर नमोऽनाद्य शिव ते ॥२३॥

तथा च-पिता यः सर्वलोकानां ब्रह्मविष्ण्वोश्च यः पिता । स शिवः सर्वलोकानां कृपाङ्कके तयोः परि ॥ इति स्कान्दस्मृत्या सर्वरूपत्वं शिवस्यैवेत्यत आह–तवाकर्णमिति । ननु यन्मनसा न मनुते येनाहुर्मनो मतं यच्चक्षुषा न पश्यति, येन चक्षूंषि पश्यति इत्यादि श्रुत्या यत्किञ्चित्कदाचिद्वा चित्ते स्फुरति दृष्टिपथमायाति तत्सर्वं तव कृपया अतो हे अनादिशिव ! तुभ्यं नमो नम इत्यर्थः ॥२३॥

## भावार्थः।

हे शिव ! आपका रूप बहुत गूढ़ है । जो वचन, मन और चक्षु आदि इन्द्रियों के विषय में नहीं आता । वह वेद की श्रुतियों से भी परे है ।

उसका चक्षु आदि इन्द्रियों के विषय में आना असम्भव है, परन्तु यदि क्वचित् चित्त में आपका भव्य रूप भासमान हो जाता है सो आपकी कृपा है। हे भव ! हे हर ! हे अनादि शिव ! आपको मैं नमस्कार करता हूं ॥ २३ ॥

त्वं

त्वमिन्दुर्भानुर्वा हुतभुगसि वायुश्च सलिलं

त्वमेवाकाशोऽसि क्षितिरसि तथात्मासि भगवन् ।

त्वं

ततस्सर्वाकारस्त्वं भवसि भवतो भिन्नमर्थं वा

नतत्सत्यं सत्यं त्रिनयन नमोऽनन्त शिव ते ॥२४॥

ननु सर्वरूपं भवं ज्ञात्वा लिंगे योऽर्चयति प्रभुमित्यादि स्मृत्या शिवस्य सर्वरूपत्वं दर्शयतीत्याह—त्वमिन्दुरिति। एवन्तर्हि सोम॰ प्रसादलब्धस्य सोम इत्येव धीमतः। उमया सहितो देवः सोम इत्यभिधीयत॥ इति स्मृत्या तथा आदित्यः समभूत्सोमात्सोमाद्बिल्वः प्रजायते, इति स्मृत्यापि च, अपरञ्च—नास्तमेति न चोदेति न शान्तो न विकारवान्। भानुर्भर्ग इति स्मृत इति स्मृत्या तद्रूपत्वं शिवस्य वेति बोध्यम्, सूर्य्यचन्द्रयोरुत्पत्तिकर्तृत्वं तथा रुद्रतेजःसमुद्भूतं द्विमूर्द्धानं द्विनासिकमिति रौद्रकल्पोक्त्या अग्निरूपत्वं अपरञ्च पञ्चभूतात्मकं विश्वं शिवरूपन्न संशय इति स्मृत्या पञ्चभूतात्मकत्वं यद्भूतं भवति भविष्यति वा तत्सर्वं शिवरूपं तद्भिन्नं यद्वस्तु तत्सत्यमपि असत्य॰ म्भवति हेत्रिनयन ! अनन्तशिव ! तुभ्यं नमो नम इत्यर्थः ॥ २४॥

## भावार्थः ।

हे शिव ! सूर्य्य-चन्द्रमा की उत्पत्ति करने वाले तथा सूर्य्य-चन्द्र रूप आप हैं। उमा के साथ शिव को सोम कहते हैं। सोम से सूर्य्य-चन्द्र की उत्पत्ति हुई है। इस स्मृति के प्रमाण से आप सूर्य्यचन्द्र रूप हैं। यह सूर्य्य अस्त होता है, उदय होता है और ग्रहणादि दोषों से मलीन होता रहता है, परन्तु आप सर्वदा एक सदृश रहते हैं। अग्नि भी रुद्र-रूप है। वायु, जल, आकाश और पृथ्वी आदि सब रूप में आप वर्तमान हैं। आप जीवात्मारूप भी हैं। मैं सत्य सत्य कहता हूं कि आपसे भिन्न कोई वस्तु नहीं है। अतः हे त्रिनयन शिव ! हे अनन्तरूप ! आपको मैं नमस्कार करता हूँ ॥२४॥

विधुं धत्सेनित्यं शिरसि मृदुकण्ठे च गरलं
नवं नागाहारं भसितममलं भासुरतनौ ।
करे शूलं भाले ज्वलनमनिशं तत्कि[illegible]ति ने
न तत्त्वं जानेऽहं भव हर नमः कूप्य शिव ते ॥२५॥

अपरमपि तस्य व्यापकत्वं दर्शयति—चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत, श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायतेति श्रुत्या तथा वक्त्राद्वै ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा। वैश्याश्चोरु-प्रदेशात्तु शूद्राः पादात्पिनाकिन इति स्मृत्यापि एवं नमोस्तु नीलग्री-वाय सहस्राक्षाय मीढुषे, इति श्रुत्यर्थं दर्शयितुमाह-विधुं धत्से इति। तथा च शिवस्य विराड्रूपत्वं सर्वदेवमयत्वमस्तीत्यभिप्रायेण शिरसि

विधुं चन्द्रमसं, धत्से दधार। लीलया कण्ठे कस्तूरीकणवन्मुने, इत्यादि स्मृत्या नीलग्रीवः अथवा, नीलमविद्यारूपं तमः गृणातीति नीलग्रीवः तथा कदाचिदीशपादादाम्बुनिर्म्माल्यपरिमेलतः । पवनः पन्नगेशेन निपीतः पुण्यकारणात् ॥ तेन, विश्वम्भराभाराधुरीणत्वमवाप्तवान्, भोगीश्वरत्वमचलमीशभूषणतापि चेति वाल्मीकोक्तथा नागाहारत्वं अपरञ्च—विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः। भवन्ति पञ्च नामानि हेतुभिः पञ्चभिर्भृशमिति स्कान्दोत्या पञ्चलक्षणयुक्तं भस्मेति शूलाच्छूलसहस्राणि निष्पतंत्यस्यतेजसेति भारतोक्त्या शूलहस्तः, भालाद्भालसम्भूतश्चित्रभानुर्भयंकरः, इति शिवरहस्योक्त्या त्रिनयनत्वं नमः कूप्याय चावट्याय चेति श्रुत्या सुवर्णरजतभिन्नं धनं कूप्यं सुवर्णादिवीजभूतं धनं तद्रूपाय हेहर कूप्यरूपाय शिवाय ते तुभ्यं नमो नम इत्यर्थः ॥ २५ ॥

## भावार्थः ।

आपके मन से चन्द्रमा हुए, नेत्र से सूर्य्य हुए, कान से वायु, मुख से ब्राह्मण, बाहु से क्षत्रिय, ऊरु से वैश्य और पैर से शूद्रजाति हुई इत्यादि प्रमाणों से विष्णु भगवान कहते हैं कि हे शिव ! आप चन्द्रमा को ललाट में धारण करते हैं । सुरासुरों के तथा जगत् की रक्षा के निमित्त कालकूट को कण्ठ में आप धारण किये नीलग्रीव कहाते हैं । अथवा नील ग्रीव आपका नाम इस कारण है कि नील जो अविद्यारूप तम है, उसको गृणाति अर्थात् ग्रहण करे इससे नीलग्रीव है । एक समय शेषनाग वायु खींचकर पीते रहे, दैववश उसमें शिव का चरणामृत आ गया, उसी

पीने से वे शिव के भूषण हुए और उनमें पृथ्वी धारण करने की शक्ति आयी। इस वाल्मीकीय के वाक्य से आप नागहार हैं। विभूति, भसित, भस्म, क्षार, रक्षा इन पांच नामों से युक्त भस्म को आप धारण करते हैं। आपके हाथ में त्रिशूल और भाल में अग्निमय नेत्र है। हे महादेव! इस जगत् में ऐसी कोई वस्तु नहीं है, जिसमें आप न हों। स्वर्ण-रजता-दिका बीजभूत धन कूप्य कहाता है। अतः कूप्यरूप जो आप हैं, सो आपको नमस्कार है ॥ २५ ॥

तवापाङ्गस्पन्दो यदि भवति भव्यश्शुभकरः
कदाचित्कस्मिंश्चिल्लघुतरनरेऽपि प्रभुवति ।
स एवैतल्लोकान्विरचयितुमल्पोपि स महान्
कृपाधारोयन्ते सुरवर नमोऽनन्त शिव ते ॥२६॥

तथा यज्जाग्रतो दूरमुदैति दैवं तदुसुप्तस्य तथैवैति दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु इति श्रुत्यभिप्रायं दर्शयन्नाह तवापाङ्गमिति। यदि लघुतरनरेपि तव कृपाकटाक्षं भवति स विरिंचितुल्यः सृष्टिकर्ता भवति अल्पोपि जनः महान्भववि यथा—विष्ण्वाद्या देवताः सर्वा रावणाद्याश्च राक्षसाः। जनकाद्याश्च राजानो गौतमाद्या महर्षयः।। सर्वे शिवप्रसादेन ऐहिकामुष्मिकं फलम्। सम्प्राप्य भोगान्भुक्त्वाथ चान्ते शिवपुरं गता ॥ इतिस्मृत्या हे शिव! सर्वेषां ऐहिकपारलौकिकफलप्रदातृत्वं त्वय्येवेति बोध्यम्। मध्ये लिङ्गं सुधाश्वेतं विपुलं दीर्घमद्भुतम्। आकाशे तरसा तत्र वागुवाचा-शरीरिणी ॥ ब्रह्मविष्णू मा विवादं कुरुतां वै परस्परं। लिङ्गस्यास्य

परम्पारं अधस्तादुपरि ध्रुवं ।। यो याति युवयोर्मध्ये स श्रेष्ठो वां सदै
हि । तदूर्ध्वं गतवान्ब्रह्मा हंसरूपी तदा किलः । वाराहरूपमास्था
अधो द्रष्टुं गतो हरिः।। शताब्दं तौ प्रयत्नेन जातश्चोर्ध्वमधः क्रमा
त्यादिस्कान्दस्मृत्या अनन्तरूपाय ते तुभ्यं नम इत्यर्थः ॥ २६ ॥

## भाषार्थः ।

जिनके कृपाकटाक्ष होने पर खराब प्रारब्ध भी उत्तम हो जाती
और जिनके क्रुद्ध हो जाने पर उत्तम प्रारब्ध भी फलदायक नहीं होत
उस शिव में मेरा मन संकल्प करे । इस श्रुति का अभिप्राय लेकर वि
भगवान् कहते हैं कि हे शिव ! आप का कृपाकटाक्ष यदि साधारण पु
के ऊपर भी हो जाय तो वह इस लोक की रचना करने की शक्ति रख
है । विष्ण्वादि देवता, रावणादि राक्षस, गौतमादि महर्षि और जनका
राजा, ये सब आप ही के कृपाकटाक्ष से लोकपूज्य तथा मान्य हुए हैं
यह आप की कृपा का प्रभाव है । हे अनन्तरूपशिव ! आप को मैं नमस्क
करता हूं ॥ २६ ॥

भवन्तं देवेशं शिवमितरगीर्वाणसदृशं
प्रमादाद्यःकश्चिद्यदि वदति चित्तेपि मनुते
सदुःखं लब्ध्वान्ते नरकमपि याति ध्रुवमिदं
ध्रुवं देवाराध्यामितगुण नमोऽनन्त शिव ते ।।२७

यथा च न समो न परस्तस्मान्महादेवेति कीर्तनात् । उपेयु
नवा देवा पिशाचा वयमीरिणेति स्कान्दस्मृत्या सर्वतः पर
शिवस्यैवेति दर्शयन्नाह-भवन्तमिति । एवन्तर्हि देवदेव वृषाक

मित्यादिस्मृत्या भवन्तं देवदेवं इतरदेवसदृशं प्रमादाद्यः कश्चिद्-ल्पज्ञः पुरुषः कथयति वा चित्तेपि मनुते तदा ध्रुवं निश्चयेन सुदुःखं लब्ध्वा अन्ते ध्रुवं नरकं याति तद्यथोक्तम्--अन्यदेवसमंशुम्भुंये-जानन्ति विमोहिताः । ते यातनामिमां क्रूरां प्राप्नुवन्ति न संशयः इति स्कान्दस्मृत्या तथा—महादेवाधिकं विष्णुं मनुते यस्तु मानवः तस्य वंशस्य सांकर्य्यमनुमेयं विपश्चितेति पाराशरपुराणोक्त्यापि च सर्वेषां देवभक्तानां त्वमेवाराध्योसि अतः हे अमितगुणागार शिव अनन्तरूप ! तुभ्यं नम इत्यर्थः ॥२७॥

## भावार्थः ।

हे देवेश ! देव-दानव दोनों आपकी उपासना करते हैं । अतः आपके सदृश अथवा आपसे बड़ा कोई नहीं है । जो पुरुष प्रमाद वश और देवों के सदृश अथवा और देवों से छोटा आपको मानते हैं, वे अतिशय दुःखको भोग कर अन्त में नरकगामी होते हैं । अतः निश्चय करके सबके आराध्य देव आप ही हैं । हे अमित गुणागार शिव तथा अनन्तरूप ! आपको मैं नमस्कार करता हूँ ॥२७॥

प्रदोषे रत्नाढ्ये मृदुलतरसिंहासनवरे
भवानीमारूढामसकृदपि सम्वीक्ष्य भवता ।
कृतंसम्यङ्नाट्यं प्रथितमपि वेदोपि वदति
प्रभावः को वाऽयं तव हर नमो वीर्य शिव ते ॥२८॥

नन्विह गन्धर्वयक्षपतगोरगसिद्धसाध्या विद्याधरामरगणा-प्सरसाङ्गणाश्च येन्ये त्रिलोकनिलये सहभूतवर्गाः प्राप्ते प्रदोष-

समये हरपार्श्वसंस्थाइति स्कान्दोक्त्या शिवस्य सर्वपूज्यत्वमाह—प्रदोषेति। तथा च वाग्देवी धृतवल्लकी शतमुखो वेणुं दधत्पद्मज-स्तालोन्निद्रकरो रमा भगवती ज्ञेय प्रयोगावृता। विष्णुः सान्द्रमृदङ्ग वादनपटुर्देवास्समन्तात्स्थिताः सेवन्ते तमनु प्रदोषसमये देवं मृडानीपतिमित्यादिस्कान्दस्मृत्या पुनः—जगद्रक्षायै त्वं नटसि ननु वामैव विभुतेति महिम्नोक्त्या अपरञ्च जटाकटाहसंभ्रद्भ्रमन्निलि-म्पनिर्झरीति ताण्डवोक्त्या भवानीं रत्नसिंहासने संस्थाप्य जग-द्रक्षार्थं त्वं नृत्यं करोषि इति वेदो वदति तव प्रभावं कोपि न जानाति तथा नमो बलाय च बलप्रथमनाय चेति श्रुत्या सर्व-बलप्रदातृत्वेन वीर्य्यरूपाय ते तुभ्यं नम इत्यर्थः ॥२८॥

## भावार्थः।

प्रदोष काल में रत्नसिंहासन पर भवानी को बैठाकर गन्धर्व, यक्ष, पतग, उरग, सिद्ध, साध्य, विद्याधर, देव तथा अप्सरागण और तीनों लोकके भूत पिशाचादिगणों के साथ आप स्वयं जगत् की रक्षा के लिये नृत्य करते हैं। सरस्वती बाँसुरी बजाती हैं। इन्द्र वेणु बजाते हैं। ब्रह्मा ताली बजाते हैं। रमा भगवती महालक्ष्मी गान करती हैं। विष्णु भगवान् मृदङ्ग बजाते हैं और सब देवगण अपना-अपना बाजा लेकर प्रदोष काल में पार्वती पति का आराधन करते हैं। इस स्कन्द पुराण के कथनानुसार सब के उपास्य देव आप हैं। ऐसा वेद कहता है। आप का प्रभाव कौन जान सकता है। सबको बल देने वाले और सबके बल नाशक वीर्य्यरूप आप हैं। आपको मैं नमस्कार करता हूँ ॥२८॥

धनुर्मेरुः शेषो धनुवरगुणो यानमवनिः
रवीन्दू ते चक्रे निगमनिकरा वाजिनिकराः ॥
धुरो लक्ष्यं यन्ता विधिरिपुहरिश्चेति निगमः
किमेवं चाप्येषो निगदति नमः पूर्ण शिव ते ॥२९॥

तथा जगतीन्तु रथं कृत्वा संयोज्य वेदवाजिनमित्यादिस्मृत्या शिवस्य सर्वाधिपतित्वं परिपूर्णत्वञ्च दर्शयतीत्यत आह—धनुर्मेरुरिति । नन्विह यद्बाणोऽभूच्छ्री पतिर्यस्य यन्ता लोकेशोऽभूत्स्यन्दनं भूस्समस्ता वाह वेदा यस्य चैकेषु जाता दग्धा ग्रामास्ताः पुरास्तत्समः कः इति ब्रह्माण्डपुराणोक्त्या शिवस्य सर्वाधिपतित्वं दर्शयति एवञ्च सुमेरुर्धनुः शेषो धनुस्तन्तुः पृथ्वी यानं दक्षिणद्वादशारन्तु षोडशारं तथोत्तरमिति स्मृत्या द्वादशकलायुक्तः सूर्य्यः रथस्य दक्षिणचक्रः एवं षोडशकलायुक्तश्चन्द्रः वामचक्रः अपरञ्च रथाङ्गे चन्द्राकौं रथचरणपाणिः सर इति स्मृत्या विष्णुर्वाणोभूत् चत्वारो वेदा वाजिनः संजाता ब्रह्मा सारथिः इति वेदो वदति अतः हेपूर्ण शिव ! तुभ्यं नमो नमः ॥२९॥

## भावार्थः ।

त्रिपुर वध के लिये सुमेरुपर्वत आपका धन्वा हुआ था। शेष नाग धन्वा के तन्तु हुये थे, पृथ्वी रथ हुई थी, सूर्य्य—चन्द्र रथ के चक्र हुये थे, चारों वेद घोड़े बने थे विष्णु वाण हुए थे, ब्रह्मा सारथी हुए थे, एक ही वाण में त्रिपुर के तीनों पुरों को आपने दग्ध कर दिया था। इस

बात को वेद-उपनिषदादि सब कहते हैं। अतः हे पूर्णरूप शिव ! आपको मैं नमस्कार करता हूँ ॥२९॥

मृडं सत्वोपेतं भवमनघयुक्तञ्च रजसा
तमोयुक्तं शुद्धं हरमपि शिवं निष्कलमिति।
वदत्वेषो वेदस्त्वमसि तदुपास्यं ध्रुवमिदं
त्वमोङ्काराकारो ध्रुवमिति नमोऽनन्त शिव ते ॥३०॥

नन्वेवं तमसा कालरुद्राख्यं रजसा कनकाण्डजम्। सत्वेन सर्वगं विष्णुं गुणातीतो महेश्वरेति भारतोक्त्या गुणत्रयेण ब्रह्मविष्णुरुद्रादीनुत्पाद्य स्वयं निष्कल एवेत्याह—मृडमिति। तथा-जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः। शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥ त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः। विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथेति श्रीमद्भागवतोक्त्या ब्रह्मविष्ण्वादीनामुत्पत्तिकर्तृत्वं सदाशिवस्यैवेति बोध्यम्। अतः निश्चयेन सर्वदेवभक्तानां त्वमेवोपास्यः इति वेदो वदति अथ च शिवो हि प्रणवो ह्येष प्रणवो हि शिव स्मृतः। वाच्यवाचकयोर्भेदो नात्यन्तं विद्यतेऽनघः ॥ प्रकर्षेण नयेद्यो वै मोक्षं वः प्रणवं विदुरिति स्मृत्या ॐकाररूपोसि अतः हे अनन्त शिव ! तुभ्यं नमः ॥३०॥

## भावार्थः।

मृड रूप जो आपका है सो सत्त्वगुण युक्त होकर पालन करता है। भव रूप जो आपका है सो रजोगुण युक्त होकर सृष्टि करता है। हर रूप

जो आपका है सो तमोगुण होकर नाश करता है। आप तीनों गुणों से परे निष्कल ब्रह्म और ओंकाररूप हैं। इस बात को वेद, उपनिषद, भारत आदि सब कहते हैं। जैसे मकड़ी अपने शरीर से बहुत सूत्र उत्पन्न करती हैं, फिर अपने में खींच लेती है। वैसे आप ही इस संसार का पालन, सृष्टि और संहार करके सबको अपने में लय कर स्वयं निष्कल होकर रहते हैं। हे अनन्त शिव ! आपको मैं नमस्कार करता हूं ॥३०॥

जगत्सुप्तिं बोधं व्रजति भवतो निर्गतमपि
प्रवृत्तिं व्यापारं पुनरपि सुषुप्तिञ्च सकलम् ।
त्वदन्यस्त्वत्प्रेर्यं व्रजति सहसा नेति निगमो ।
वदत्यद्धा सर्वः शिव इति नमः स्तुत्य शिव ते ॥३१॥

एवं सर्वं जगद्यस्य रूपं दिग्वासा तेन कीर्त्यते इति स्मृत्या शिवस्य सर्वकर्तृत्वमस्तीत्याह—जगत्सुप्तिमिति । यथैको देवः सर्वभूतेषु गूढो मायी रुद्रो केवलो निष्कलश्चेति श्रुत्या तथा त्वत्तो हि जातं जगदेतदीश त्वय्येव भूतानि विशन्ति नित्यंत्वय्येव शम्भो विलयम्प्रयान्ति भूमौ यथा वृक्षलतादयोपीति पद्मपुराणे रामचन्द्रवाक्याद्यथोर्णनाभिः सृजते गृह्णते चेति स्मृत्या हे शिव ! सर्वं जगत्त्वत्तो जातं प्रवृत्ति व्यवहारञ्च कृत्वा पुनस्त्वय्येव लयं व्रजति त्वदन्यस्त्वत्प्रेरकञ्च अन्यत्कोपि नास्तीत्यतः स्तुतियोग्याय शिवाय कल्याणरूपाय तुभ्यं नम इत्यर्थः ॥३१॥

## भावार्थः ।

हे शिव ! यह जगत् आप ही से उत्पन्न होकर आप ही में रहता है

और सब व्यापार करके पुनः आप ही में लय हो जाता है। अन्य दूसरा कोई आपका प्रेरक नहीं है। सबके प्रेरक आप ही हैं। ऐसा वेद निषेध मुख करके बारम्बार कहता है। सर्वत्र साक्षात् रूप से जगत् में व्यापक होकर आप रहते हैं। अतः आप दिगम्बर हैं। आपही से जगत् उत्पन्न होकर आपही में रहता है पुनः आप ही में लय हो जाता है। ऐसा रामचन्द्र का भी वाक्य है। जैसे मकरी अपनी देह से बहुत सूत्र उत्पन्न करती है पुनः अपने में खींच लेती है। वैसे ही सब जगत् आप से हुआ है। पुनः आप ही में लय हो जाता है। अतः स्तुति योग्य जो आप हैं, सो आपको मैं नमस्कार करता हूं ॥३१॥

तवैवांशो भानुस्तपति विधुरप्येति पवनः
पवत्येषो वन्हिर्ज्वलति सलिलञ्च प्रवहति।
तवाज्ञाकारित्वं सकलसुरवर्गस्य सततं
त्वमेकः स्वातन्त्र्यं वहसि हि नमो वेद्य शिव ते ॥३२॥

अथापरञ्च आदित्यस्समभूत्सोमात्सोमाद्बिल्वः प्रजायते इति स्मृत्या तत्परत्वं वर्णयन्नाह—तवैवांशेति। तस्मैतृणंनिदधावतद्दहेति अग्निस्सर्वजवेन न दग्धुं सशाकेति केनोपनिषच्छ्रुत्या तथा भीषाऽस्माद्वातः पवते भीषोदयति सूर्य्यः भयादग्निश्च वायुश्च मृत्युर्धावति पञ्चमः एतादृशं महादेवं सर्वश्रुत्यन्तविश्रुतमित्यादि श्रुत्या त्वद्भयाद्भानुस्तपति विधुर्गच्छति पवनः प्रवहति वह्निर्ज्वलति जलं प्रवहति। सर्वेषां तवाज्ञाकारित्वंसिद्धम् सकलदेवगणानामपि स्वातन्त्र्यं नास्ति। ब्रह्मविष्णुविवादे—ॐकारवाक्यम्। ब्रह्मत्रयं सृष्टिकाले

त्वां नियुक्ते रजोगुणैः । सत्वेन सर्वगं विष्णुं त्वां प्रेषयति केशव ॥ अतः स्वतन्त्रता विष्णोर्युवयोर्नास्ति कश्चन इति ॥ स्कान्दस्मृत्या तथा तपस्तप्त्वा क्रतुंकृत्वा दत्वा दानान्यनेकशः न वाञ्छन्ति यतो लोका गर्भवासं सुदुस्सहम् स कथं भगवान्विष्णुः स्ववशश्चेज्जनार्दन ॥ इति देवीभागवतोक्त्यापि च देवानां स्वतन्त्रता नास्ति स्वतन्त्रस्त्वमेवासि अतः हे वेदवेद्य शिव ते तुभ्यं नम इत्यर्थः ॥३२॥

## भावार्थः ।

हे शिव ! आप ही के अंश से सूर्य्य उत्पन्न होकर ताप देते हैं । चन्द्रमा भी आप ही की आज्ञा से आकाश में चलते हैं । वायु बहते है । अग्नि बरते हैं । जल बहता है । मृत्यु मारती है । यह सब आप ही की आज्ञा के भीतर हैं । स्वतन्त्र नहीं हैं । स्वतन्त्र एक आप ही हैं । वेद में भी लिखा है कि सब उन्हीं की आज्ञा के भीतर हैं । ॐकार का भी वचन ब्रह्मा विष्णु के प्रति है कि हे ब्रह्मा और विष्णु ! तुम दोनो स्वतन्त्र नहीं हो देवी भागवत में भी कहा है कि तप-यज्ञादि कर्म करके मनुष्य परमेश्वर से यही प्रार्थना करता है कि मैं गर्भवास के दुःख से मुक्त हो जाऊँ । सो विष्णु भगवान की गर्भवास में रुचि क्यों हुई ? अतः वह भी स्वतंत्र नहीं हैं । हे वेद वेद्यशिव ! आपको मैं नमस्कार करता हूं ॥३२॥

नमो रुद्रानन्तामरवर नमः शंकर विभो ।
नमो गौरीनाथ त्रिनयन शरण्यांघ्रिकमल ।
नमः सर्व श्रीमन्नघमद्दैश्वर्यनिलय
स्मरारे पापारिन् जयजय नमः सेव्य शिव ते ॥३३॥

अथ ब्रह्मविष्णुमहेशानां स्रष्टा च प्रभुरेव चेति भारतस्मृत्या च शिवस्य सर्वदेवमयत्वं दर्शयतीत्यत आह–नमो रुद्रायेति। रुद् दुःखं दुःखहेतुर्वा तद्द्रावयति नः प्रभुरित्यादिस्मृत्या अथवा रोदयत्येव यस्सर्वान्स्वस्मिन्भक्तिविवर्जितानित्यादि स्मृत्या रुद्राय नम इत्यर्थः। तथा वाराहरूपमासाद्य अधो द्रष्टुङ्गतो हरिस्तदूर्ध्वं गतवान्ब्रह्मा हंसरूपी तदा किल इत्यादि स्मृत्या अनन्ताय पुनर्नमः देवदेव महादेव विश्वस्य जगतः पते इति स्मृत्या अमरवराय तुभ्यं नमः तथा शं कल्याणं करोतीति शंकराय सर्वान्देवानीशते जननीभिः परमशक्तिभिरित्यादिश्रुत्या विभुरूपाय गौरीनाथाय नमः सर्वग्रासो महादेवो ब्रह्माण्डान्यखिलं जगदिति स्मृत्या त्रिनेत्राय नमः। शिवे त्रातरि भक्तानाक्व भयं शरणैषिणामित्यादि स्कान्दस्मृत्या शरण्यांघ्रिकमलाय नमः। यद्यथावस्थितं वस्तु तत्तथैव सदाशिवः। अयत्नेनैव जानाति तेन प्रोक्तस्सदाशिवः॥ इति स्कान्दस्मृत्या सर्वव्यापकाय नमः। देवासुरमनुष्येषु ये भजन्त्यशिवं शिवं। श्रीमन्तस्ते भवन्त्येव न तु लक्ष्म्याः पतिर्हरिरित्यादिस्मृत्या श्रीकराय अघहराय नमः सुरास्तास्तामृद्धिं विदधति महद्भ्रू प्रणितामित्यादिमहिम्नस्मृत्या मरुदैश्वर्यनिलयाय नमः तथा च भालाक्षभालसम्भुतशिचत्रभानुर्भयं करः भस्मावशेषं कृत्वैव प्रशान्तस्तदनन्तरमित्यादि शिवरहस्योक्तस्मृत्या कामनाशकराय नमः तथा तावद्गर्जन्ति पापानि जन्मजन्मार्जितानि च यावन्न जाति शरणं देही शिवपदाम्बुजमित्यादि स्मृत्या पापनाशकराय सर्वत्र जयरूपाय सेव्याय ते तुभ्यं वारं वारं नमो नम इत्यर्थः॥३३॥

## भावार्थः ।

आप अपनी भक्ति से विमुख जनोंको रुलाते हैं अथवा रु नाम दुःख का है, तिसको जो द्रावण करे अर्थात् नाश करे उसको रुद्र कहते हैं । अतः हे रुद्र ! हम आपको नमस्कार करते हैं । ब्रह्मा-विष्णु ये दोनों आपके लिंग का अन्त पाने को गये, किन्तु थकित होकर लौट आये—इन्हें अन्त नहीं ही मिला । अनन्तरूप जो आप हैं, सो आपको नमस्कार है । हे शंकर ! हे गौरीनाथ ! हे त्रिनयन ! आपको नमस्कार है । हे शरण्यांघ्रिकमल ! आपको नमस्कार है । जगत् में जो कुछ कार्य्य होता है, सो सब आपके सन्मुख होता है, अतः आप सर्वज्ञ हैं । ब्रह्म-विष्णवादि देवों का जो विभव है सो सब आप ही का दिया हुआ है । अतः लक्ष्मी को देने वाले आप हैं । हे कामनाशक ! हे पापारिन् ! आपकी जय हो—जय हो ! हे सर्वसेव्य शिव ! मैं आपको बारम्बार नमस्कार करता हूं ॥३३॥

महादेवामेयानघगुणग्रामसततं
नमो भूयोभूयः पुनरपि नमस्ते पुनरपि ।
पुराराते शम्भो पुनरपि नमस्ते शिव इति
नमो भूयो भूयः शिव शिव नमोऽनन्त शिव ते ॥३४॥

तथा च न समो न परस्तस्मान्महादेवेति कीर्तनादित्यादिस्मृत्या सर्वेषां देवानां मध्ये शिवस्यैव महादेवत्वमस्तीत्यत आह—महादेवेति । प्रमाणरहितत्वेनामेयत्वं पापरहितत्वेनानघत्वं गुणसमूहत्वेन गुणग्रामः मयि या परमा शक्तिस्त्रिलोक्या रक्षणक्षमा तत्र

हेतुर्महादेवः स सुदर्शनचक्रदः इति काशीखण्डे विष्णुवाक्यम् एवम्भूतं शिवं वारं वारं पुनरपि वारम्वारं नमस्ते। क मे भुजाः पर्वतराजसारा क दानवः कृपणः सत्वहीनः इति स्कान्दस्मृत्या हेपुराराते! पुनरपिभूयोभूयः नमस्ते तथा च यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः इति स्मृत्या अनन्ताय ते तुभ्यं नमो नम इत्यर्थः॥ ३४॥

## भावार्थः।

हे महादेव! आप अमेय अर्थात् प्रमाणरहित हैं और सब गुणग्राम गुणसमूह आप में हैं। अतः हम आपको बारम्बार नमस्कार करते हैं। पुनः बारम्बार नमस्कार करते हैं। हे त्रिपुरारी! पुनः बारम्बार आपको नमस्कार है। हे अनन्त शिव! पुनः मैं आपको नमस्कार करता हूँ॥ ३४॥

कदाचिद्दुगण्यन्ते निविडनियता वृष्टिकणिकाः
कदाचिन्नक्षत्राण्यपि सिकतलेशाः कुशलिना।
अनन्तैराकल्पं शिवगुणगणाश्चारुरसनै
र्न शक्यन्ते नूनं गणयितुमुखिरवापि सततम्॥ ३५॥

तथा च असितिगिरिसमं स्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनीपत्रमुर्वी। लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीश पारं न याति इत्यादिस्मृत्या शिवगुणकथनासम्भवं दर्शयन्नाह—कदाचिदिति। कदाचित् वृष्टिकणिकाः केनापि गण्यन्ते केनापि नक्षत्राण्यपि गण्यन्ते गङ्गायाः सिकताः

अपि केनचिद्गणयन्ते परन्तु तव महिम्नः गणना असम्भवः । यथायस्वा वेधा वेद नो नैव विष्णुर्नो वा वेदा वेद नो नैव वाणी तं देवेशं मादृशः कोल्पमेधा याथार्थ्याद्वेत्यहो विश्वनाथमिति ब्रह्माण्डपुराणे व्यासोक्त्यापि बोध्यम् ॥३५॥

## भावार्थः ।

हे शिव ! कदाचित् वृष्टि की बूंदें कोई गणना करे तो कर सकता है और कदाचित् गङ्गा के सिकता कण गिनने में बहुत लोग कुशल हो सकते हैं और नक्षत्रों को भी ज्योतिष शास्त्र द्वारा गणना होना सम्भव है परन्तु आप की जो अनन्त महिमा है, उसका अन्त किसीने नहीं पाया और न पाने की सम्भावना ही है ॥३५॥

प्रमादाद्ये केचिद्विदितमपराधाद्विधिहताः
कृताः सर्व्वेऽपि प्रशममुपयान्तु स्फुटतरम् ॥
शिव श्रीमच्छम्भो शिवशिवमहेशेति च जपन्
क्वचिल्लिङ्गाकारे शिवशिव वसामिस्थिरतरम् ॥३६॥

नन्विह कृतघ्नो मुच्यते कल्पे तथान्ये तारतम्यतः । महापापोपपापेभ्यो मद्द्रोहेनैव निष्कृतिः ॥ शास्ताहं मोचकस्तेषां न यमो भैरवो नहीति शिवरहस्योक्तस्मृत्यर्थं दर्शयन्नाह—प्रमादादिति । अथ शिवलिङ्गार्चनं साम्याद्विष्णुरूपादिपूजनं तप्तचक्राङ्कनं मोहान्मद्द्रोहः परमो मतः इति स्मृत्या ये केचिद्विधिहताः प्रमादवशात् शिवद्रोहं कुर्वन्ति तेषां प्रायश्चित्तं महेशरुद्रमहादेवेत्यादिनामजपेन अनन्य

शिवभक्त्या शुद्ध्यन्तीत्याशयः । तद्यथोक्तम्—कृत्वा पापसहस्राणि हत्वा विप्रशतन्तथा पायात्समाश्रिते लिङ्गे मुच्यते नात्र संशयः इत्यादिस्मृत्या बोध्यम् ॥३६॥

## भावार्थः ।

हे महादेव ! प्रमादवश जो आपकी निन्दारूपी अपराध करते हैं। (निन्दा यही है कि और देवों के बराबर शिव को मानना अवैदिक उर्ध्वपुंड्रादिवेषको धारण करना) उन भाग्यहीन पुरुषों का अपराध केवल आपके नामस्मरण पूजन से ही दूर होता है । अन्यथा सैकड़ो व्रत यज्ञादि करने से नहीं दूर होता । विष्णु भगवान कहते हैं—हे शिव ! शिव नाम जपते हुये अनन्य शिवभक्त होकर कब मैं एकान्तवासी होऊँगा, यही हमारी प्रार्थना है ॥३६॥

इति स्तुत्वा शिवं विष्णुः प्रणम्य च मुहुर्मुहुः ।
निर्विण्णोन्वभवन्मन्त्रं कृताञ्जलिपुटः स्थितः ॥३७॥
तदा शिवः शिवं रूपं आदायोवाच सर्वगः ॥
भीषयन्नखिलान्भूतान्मेघगम्भिरया गिरा ॥३८॥
मदीयम्परमं रूपं कथं ज्ञेयं भवादृशैः ॥
यन्न वेदैरपि ज्ञातमित्यु क्त्वान्तर्दधे शिवः ॥३६॥

नन्वेवं प्रकारेण विष्णुः शिवं स्तुत्वा वारं वारं प्रणम्य अनन्य मनसः कृताञ्जलिपुटः स्थितः सन् अखिलान्भूतान्भीषयन् शिवः

कल्याणरूपमादाय मेघगम्भीरया वाण्या विष्णुं प्रत्युवाचेति परमार्थः ॥३७॥ ॥३८॥

अथ सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिप्रोक्तं मदीयं रूपं वाङ्मनसातीतं तथा वेदैरपि न ज्ञातं तद्रूपं भवादृशैरल्पज्ञैः कथं ज्ञेयमित्युक्त्वा अन्तर्हितोऽभूदित्यर्थः ॥ ३६ ॥

## भावार्थः ।

इस प्रकार विष्णु भगवान शव की स्तुति और बारम्बार प्रणाम करके हाथ जोड़कर बैठ रहे और शिवकी अनन्य भक्ति को हृदय में धारण करके ध्यानमग्न हो गये ॥ ३७ ॥

इसके बाद शिव कल्याणरूप धारण कर अखिल ब्रह्माण्ड को क्षुभित करते हुए ब्रह्मा-विष्णु के प्रति मेघ के सदृश गम्भीर बाणी से बोले—॥ ३८ ॥

तुम सबके सदृश अल्पज्ञ पुरुष हमारे रूप को नहीं जान सकते। हमारा दिव्य रूप जो है, उसको वेद ने भी नहीं जाना। ऐसा कहकर शिवजी अन्तर्धान हो गये ॥ ३९ ॥

ततः पुनर्विधिस्तत्र तपस्तप्तं समाचरत् ।
विष्णुश्च शिवतत्त्वस्य ज्ञानार्थमतियत्नतः ॥४०॥
तादृशं शिवमेवेच्छन्पूजयित्वा वसाम्यहम् ।
नान्यो ममार्च्यो देवेषु विना शम्भुं सनातनम् ॥४१॥

त्वयापि शांकरं लिङ्गं पूजनीयं प्रयत्नतः ।
विहायैवान्यदेवानां पूजनं शेष सर्वदा ॥४२॥

इति श्रीशिवरहस्ये सप्तमांशे विष्णुकृतं शिवमहिम्नस्तोत्रं सम्पूर्णम् ।

तत्पश्चाद्ब्रह्मा विष्णुश्च शिवतत्त्वज्ञानार्थं अति यत्नेन पुनस्तपस्तप्तुं प्रवृत्तौ ॥ ४० ॥ ब्रह्माणम्प्रति विष्णुः कथयति—शिवतत्त्वज्ञानार्थं शिवं सम्पूज्यात्र वसामि । तद्यथोक्तं स्मृत्यन्तरे विष्णु वाक्यम्—षष्टिकोटियुगाज्जाता मम शैवव्रतस्य हि । इदानीमपि देवेश शम्भुर्मे न प्रसीदतीत्यादिस्मृत्या देवानां मध्ये शिवं संत्यज्य नान्यम्पूजयामीत्यर्थः ॥ ४१ ॥ हेब्रह्मन् ! सर्वान्देवान्विहाय त्वयापि यत्नतः शिवलिङ्गं पूजनीयम् । यथोक्तम्-शिवान्यदेवास्त्वत्यल्पमैहिकामार्थकामदाः । अतिप्रीताः प्रयच्छन्ति स्वस्वशक्त्यानुरोधतः इति स्मृत्या तेनैव अशेषसिद्धिर्भविष्यतीति शिवम् ॥

इति श्रीयोगिराजेन विप्रराजेन वै कृतम् ।
सुधियस्तेन तुष्यन्तु भाष्यं नानार्थसंयुतम् ॥ ४२ ॥

## भावार्थः ।

इसके बाद शिवतत्त्व प्राप्त करने के लिये ब्रह्मा-विष्णु दोनों तप करने में प्रवृत्त हुए ॥ ४० ॥ विष्णु भगवान ब्रह्मा से कहते हैं कि हे ब्रह्मन् ! शिव से अन्य किसी का मैं पूजन नहीं करता । जिन शिव

का तुमको दर्शन हुआ है, उन्हींका पूजन करता हुआ सदा मैं यहीं रहता हूं ॥ ४१ ॥ सबको छोड़कर तुम भी शिवलिङ्ग का यत्नपूर्वक पूजन करो, इससे अशेष सिद्धि प्राप्त होगी । ॥ ४२ ॥

इति श्रीविष्णुकृतमहिम्नस्तोत्र भाषा टीका समाप्ताः ।

---

कथितमिदमगम्यं शास्त्रसिद्धान्तमेकम्
परशिवपरतत्त्वं वेदप्रोक्तं हि यत्तु ।
बुधवरविदुषाम्वै सम्यगानन्दहेतोः
कलिमलभ्रमितानां दुःखसंनाशनाय ॥

ॐ

श्रीगौरीशङ्कराभ्यां नमः ।

# हरिहरतारतम्यम् ।

( वसन्ततिलकावृत्तं सर्वत्र )

वृद्धान् श्रुतिस्मृतिपुराणविशेषभाषान्
निःशंकबुद्धिकुशलान् प्रणिपत्य नित्यम् ।
अद्वैतमेकमभजं श्रितभेदबुद्धिः
पृच्छाम्यहं हरिहरस्थिततारतम्यम् ॥ १ ॥

एकः समुद्रसलिले वटपत्रशायी
त्वन्यः समुद्रशरधिस्त्रिपुरप्रभेदे ।
को वानयोरधिक इत्यनुचिंत्य वृद्धाः
सत्यं वदंतु तमिमं वयमाश्रयामः ॥ २ ॥

एको भुजंगशयने स्वपतीह नित्य-
मन्यो भुजंगकटको नटतीह नित्यम् ।
को वा..............................................................
सत्यं.............................................................. ॥ ३ ॥

एकः पुनर्भुवि दधौ नवनीतखंड—
मन्यो दधौ नवसुधामयचन्द्रखंडम् ।
को वा.......................................
सत्यं....................................... ॥ ४ ॥

सृष्टुं चकार चतुराननमेवमेकः
सूतं चकार चतुराननमेव चान्यः ।
को वा.......................................
सत्यं....................................... ॥ ५ ॥

एकोऽस्ति नन्दकुटिलव्रजमंदिरेषु
त्वन्योऽस्ति मेरुशिखरस्थितकंदरेषु ।
को वा.......................................
सत्यं....................................... ॥ ६ ॥

एकः ❀ सहस्रकमलैर्यमुपार्च्य तस्था—
वन्यस्तु तैरुपचितः सह मोदतेस्म ।
को वा.......................................
सत्यं....................................... ॥ ७ ॥

गाढांधकारघननीलशरीर एको—
ज्योत्स्नातिनिर्मलविशुद्धशरीर एकः ।
को वा.......................................
सत्यं....................................... ॥ ८ ॥

---

❀ यो वामपादार्चितविष्णुनेत्रस्तस्मै ददौ चक्रमतीव हृष्टः ॥ शरभोपनिषद् ।

एकः कुमारमभजत्सुतरामनंगः
अन्यः प्रयाति किल शक्तिधरं कुमारम् ।
को वा ……………………………………
सत्यं …………………………………… ॥ ९ ॥

स्त्रीरूपमाप किल पूर्वमभीष्टमेक—
स्त्वन्यस्तमेवमभजत्पुरुषस्य रत्या ।
को वा ……………………………………
सत्यं …………………………………… ॥ १० ॥

मुष्णाति वल्लवगृहे नवनीतमेक—
स्त्वन्यो ददाति सुधया परमामृतं तत् ।
को वा ……………………………………
सत्यं …………………………………… ॥ ११ ॥

एकः प्रयाति हि सकाम इति प्रसिद्धि-
मन्यस्तथा निहतकाम इति प्रसिद्धिम् ।
को वा ……………………………………
सत्यं …………………………………… ॥१२॥

एकस्य जात इति संततलोकवार्ता
नान्यस्य तादृशविदूषितदोषवार्ता ।
को वा ……………………………………
सत्यं …………………………………… ॥१३॥

एकस्य वार्धुषिकजीवनवृत्तिरासी—
दन्यस्य चापि बहुभाग्यदवृत्तिरासीत् ।
को वा..................................
सत्यं.................................. ॥१४॥

एकस्तु बाणगतिमेत्य करत्रणोऽद्य
स्त्वन्योऽत्तिपत्पुरजयाय तमेव बाणम् ।
को वा..................................
सत्यं.................................. ॥१५॥

एको विभाति रविचंद्रमयद्विनेत्र-
स्त्वन्यो रवींदुशिखिरूपघनत्रिनेत्रः ।
को वा..................................
सत्यं.................................. ॥१६॥

एकः सदा सवितृमंडलमध्यवर्ती
चान्यः सदा सवितृदत्तभिदा पटीयान् ।
को वा..................................
सत्यं.................................. ॥१७॥

एकस्तु दीनगजरक्षणदत्तबुद्धि—
स्त्वन्यस्तु मत्तगजशिक्षणदत्तबुद्धिः ।
को वा..................................
सत्यं.................................. ॥१८॥

गोपालकत्वमधिगम्य बिभाति चैक—
स्त्वन्यो वृषाधिपतिवाहन इत्यवादि ।
को वा........................................
सत्यं........................................ ॥१९॥

ब्रह्माणमपि निजनाभिसरोज एको—
न्यो ब्रह्मणो नखमुखेन शिरश्चकर्त ।
को वा........................................
सत्यं........................................ ॥२०॥

विश्वैकदेशवसतिर्मुदमेति चैको
विश्वाधिकोऽयमिति गच्छति कीर्तिमन्यः ।
को वा........................................
सत्यं........................................ ॥२१॥

एकोऽस्ति केशव इति प्रथितस्तु लोके—
न्यो व्योमकेश इति याति जगत्प्रसिद्धिम् ।
को वा........................................
सत्यं........................................ ॥२२॥

एकः सभक्त्युदहरन्निजभक्तिपूर्त्यै
त्वन्यस्तदा नयनमस्य ददौ च चक्रम् ।
को वा........................................
सत्यं........................................ ॥२३॥

एको ह्यगाधलुठदब्धिजले निमग्नः
कैलासशैलशिखरे खलु वर्ततेऽन्यः ।
को वा.................................
सत्यं................................. ॥ २४ ॥

एकः सुरैरुपगिरं हि तपश्चकार
तस्मै ददौ सुतमधिक्षिति सांबमन्यः ।
को वा.................................
सत्यं................................. ॥ २५ ॥

एकस्तु नैल्यमुपयाति शरीरमात्रे
त्वन्यस्तु नैल्यमुपयच्छति कण्ठमात्रे ।
को वा.................................
सत्यं................................. ॥ २६ ॥

एकः प्रसिद्ध इह धेनुवधं विधाय
व्याघ्रं निहत्य नितरामितरः प्रसिद्धः ।
को वा.................................
सत्यं................................. ॥ २७ ॥

एकः सुवर्णवसनं विदधाति कव्या—
मन्यः सुवर्णगिरिचापमधात्क राग्रे ।
को वा.................................
सत्यं................................. ॥ २८ ॥

एकः सदाष्टमहिषीरुपयाति शीघ्र—
मन्यो बिभर्ति नितरामपि चाष्टमूर्तिम् ।
को वा..............................................
सत्यं.............................................. ॥ २९ ॥

एको दधौ शिरसि वर्हिणपिच्छमात्र—
मन्यो मयूरवरवाहनपुत्रदृष्टिः ।
को वा..............................................
सत्यं.............................................. ॥ ३० ॥

एको दधाति हृदि कौस्तुभरत्नमेक—
मन्यः सहस्रफणिरत्नमहींद्रहारम् ।
को वा..............................................
सत्यं.............................................. ॥ ३१॥

इंद्रानुजत्वत उपेंद्र इतीड्य एक
इन्द्रादिभिः सुरगणैः परिपूज्यतेऽन्यः ।
को वा..............................................
सत्यं.............................................. ॥३२॥

लक्ष्मीं वहन्नपि च वांछति वित्तमेको
भिक्षामटन्नपि च यच्छति भाग्यमन्यः ।
को वा..............................................
सत्यं.............................................. ॥३३॥

एकः करेण धृतवानिह शंखमेक—
मन्यस्तथैव बहुविश्वसृजां कपालान् ।
को वा.......................................
सत्यं....................................... ॥३४॥

एकस्तु माधव इति प्रथितः स्वनाम्ना
त्वन्यो ह्युमाधव इति प्रथितः स्वनाम्ना ।
को वा.......................................
सत्यं....................................... ॥३५॥

वृंदावने चरति गोभिरुपेत्य चैकः
त्वन्यो भृशं पितृवने चरतीह भूतैः ।
को वा.......................................
सत्यं....................................... ॥३६॥

व्याप्तश्च विष्णुरयमित्यनुभाव्य एकोऽ—
न्यो विष्णुवल्लभ इति प्रथितस्त्रिलोक्याम् ।
को वा.......................................
सत्यं....................................... ॥३७॥

एकः कदापि मधुमात्रहृतिं चकार
त्वन्यो महाविषहृतिं च तथा चकार ।
को वा.......................................
सत्यं....................................... ॥३८॥

एकस्तु कैटभवधे निपुणस्तथैव-
मन्यस्तु मृत्युहनने निपुणो नितांतम् ।
को वा.........................................
सत्यं......................................... ॥३९॥

एको व्रजेषु कुरुते मृदु वेणुनाद—
मन्यो लयेषु कुरुते विकटाट्टहासम् ।
को वा.........................................

सत्यं......................................... ॥४०॥
पक्षींद्रवाहन इति प्रथितोऽयमेक—
स्त्वन्यो महोक्षवरवाहन इत्यभाणि ।
को वा.........................................
सत्यं......................................... ॥ ४१ ॥

एकस्तु योनिज इति ह्यगमत्प्रसिद्धि—
मन्यस्त्वजात इति याति जगत्प्रसिद्धिम् ।
को वा.........................................
सत्यं......................................... ॥ ४२ ॥

एकस्त्वनित्य इति सुप्रथितो जगत्या—
मन्यस्तु नित्य इति शंसति लोकसिद्धिम् ।
को वा.........................................
सत्यं......................................... ॥ ४३ ॥

एको ह्युलूखलनिबद्ध इति प्रसिद्ध-
स्त्वन्यो विमुक्तभवपाश इति प्रसिद्धः ।
को वा..................................
सत्यं.................................. ॥ ४४ ॥

एकस्तु पार्थरथवाजिकृतोपचार-
स्त्वन्यस्तु पार्थसमरगुप्रणुतप्रभावः ।
को वा..................................
सत्यं.................................. ॥४५॥

एको जनार्दन इति प्रकटीकृतोऽय-
मन्यस्तु शंकर इति स्फुटमीड्यतेस्म ।
कोवा..................................
सत्यं.................................. ॥४६॥

एकस्तु राम इति कोमलनाम धत्ते
रामेश्वरोऽन्य इह पौरुषनाम धत्ते ।
को वा..................................
सत्यं.................................. ॥४७॥

भक्तं बलिं पुनरधः कृतवानिहैको
भक्तं कुबेरमधिकश्रियमाधृतोऽन्यः ।
को वा..................................
सत्यं.................................. ॥४८॥

व्याधादिनी च हृतनैजवधूक एको
व्याधायितोऽपि निगमैरखिलः स्तुतोऽन्यः ।
को वा.................................
सत्यं................................. ॥४९॥

एकस्य सेवकजना भृशदग्धगात्रा
ह्यन्यस्य सेवकजनाः सितभूतिरेखाः ।
को वा.................................
सत्यं................................. ॥५०॥

एको दधौ सितमृदं तिलकं ललाटे
त्वन्यो दधौ हुतवहं तिलकं ललाटे ।
को वा.................................
सत्यं................................. ॥५१॥

एको दधाति तुलसीकृतमालिकां ह्—
यन्यो दधाति विधातृकपालमालाम् ।
को वा.................................
सत्यं................................. ॥५२॥

गोपालकैरनुसृतः सुतरामिहैको
दिक्पालकैरनुसृतस्तु दिगम्बरोऽन्यः ।
को वा.................................
सत्यं................................. ॥५३॥

एको गिलत्यनुदिनं नवनीतमेव—
मन्यो गिलत्यतिभयङ्करकालकूटम् ।
को वा........................................
सत्यं........................................ ॥५४॥

एकः पपौ स्तनविषं खलु पूतनाया
अन्यः पपौ भुवनभीकरकालकूटम् ।
को वा........................................
सत्यं........................................ ॥५५॥

एको मृगोभिलषितो गहने चचार
ह्यन्यो मृगं करतलेन वहंश्चचार ।
को वा........................................
सत्यं........................................ ॥५६॥

एको दशास्यहृतनैजवधूक आसी—
दन्यो वधूविलसितार्धशरीर आसीत् ।
को वा........................................
सत्यं........................................ ॥५७॥

एकस्तु शैलनिचयैर्जलधिं बबंध—
ह्यन्तस्तमेव शरधिं त्रिपुरे चकार ।
को वा........................................
सत्यं........................................ ॥५८॥

एकस्तु मर्कटभटेन ददाह लंकां
ह्यन्यो ददाह नयनेन पुरत्रयं च ।
को वा.........................................
सत्यं......................................... ॥ ५९ ॥

एकस्तु मर्कटभटैर्निजकार्यकारी
ह्यन्यः सुरेन्द्रनिवहैर्निजकार्यकारी ।
को वा.........................................
सत्यं......................................... ॥६०॥

एको विवेश सरयूसलिलांतराले
त्वन्यो दधौ त्रिपथगां कणवज्जटायाम् ।
को वा.........................................
सत्यं......................................... ॥६१॥

एकः शिवं जनयतिस्म सभक्तिसेतौ
रामेश्वरोऽद्य तु जनैः परिदृश्यतेऽन्यः ।
को वा.........................................
सत्यं......................................... ॥६२॥

एकस्तु मत्स्यतनुमेत्य गतोऽब्धितोये
ह्यन्यस्तु मत्स्यकलितध्वजधृक् प्रसिद्धः ।
को वा.........................................
सत्यं......................................... ॥६३॥

एको नृसिंहतनुमेत्य जघान दैत्य—
मन्यस्तमेव हतवान् शरभावतारे ।
को वा..................................
सत्यं.................................. ॥६४॥

एको वटुः कपट इत्यखिलैरभाणि
विद्यागुरुस्त्वपर इत्यखिलैरभाणि ।
को वा..................................
सत्यं.................................. ॥६५॥

एकोऽतिदम्भहतवानिह ताटकां स्त्री—
मन्यो जघान च मदांधकराक्षसं हि ।
को वा..................................
सत्यं.................................. ॥६६॥

एकस्य रावणवधेऽस्ति दृढासिशक्ति—
रन्यस्य सर्वविलयेऽहि चास्ति शक्तिः ।
को वा..................................
सत्यं.................................. ॥६७॥

एकः प्रसिद्ध इह संप्रति वासुदेवो
देवो महानिति सदा त्वपरः प्रसिद्धः ।
को वा..................................
सत्यं.................................. ॥६८॥

एकः पदत्रयमितं त्रिजगच्चकार
ह्यन्यः पदाहतिहतं त्रिजगच्चकार ।
को वा..................................
सत्यं.................................. ॥६९॥

एकस्य रूपमधिगच्छति तामसत्व—
मन्यस्य रूपमधिगच्छति सात्त्विकत्वम् ।
को वा..................................
सत्यं.................................. ॥७०॥

एकः पदेन शकटं सहसा नुनोद—
ह्यन्यः पदांगुलिनखेन गिरिं नुनोद ।
को वा..................................
सत्यं.................................. ॥७१॥

नीलोऽपि नीलयमुनाजलमग्न एकः
शुभ्रोऽपि शुभ्रतरदिव्यधुनीधरोऽन्यः ।
को वा..................................
सत्यं.................................. ॥७२॥

एकस्य सूनुरपि नेत्रकृशानुदग्धो
ह्यन्यस्य वत्स उदितः खलु शाश्वतायुः ।
को वा..................................
सत्यं.................................. ॥७३॥

एको वराहतनुमेत्य भुवं लिलेख
ह्यन्यो भुवं पुरजये स्वरथं चकार ।
को वा..................................
सत्यं.................................. ॥७४॥

एकश्चलां निजवधूं न शशाक रोद्धु—
मन्यश्चकार वनितां स्फुटमर्धगात्रे ।
को वा..................................
सत्यं.................................. ॥७५॥

एको बिभाति नितरां शिखिपिच्छचूड—
स्त्वन्यो बिभाति नितरां नवचन्द्रमौलिः ।
को वा..................................
सत्यं.................................. ॥७६॥

एकस्य सूकरजनिः सुलभास्ति हीना
ह्यन्यस्य चच्चरभरूपमतिप्रसिद्धम् ।
को वा..................................
सत्यं.................................. ॥७७॥

एको बिभाति भृशमेकमुखांबुजेन
ह्यन्यो बिभाति भुवि पंचमुखैः प्रसिद्धैः ।
को वा..................................
सत्यं.................................. ॥७८॥

एकश्चतुर्भुज इति प्रथितस्त्रिलोक्या—
मन्यो भृशं दशभुजैः प्रथितो जगत्याम्।
को वा..............................................
सत्यं.............................................. ॥७९॥

पंचायुधप्रबलशक्तिमुपैति चैकः
सर्वायुधप्रबलशक्तिमुपैति चान्यः।
को वा..............................................
सत्यं.............................................. ॥८०॥

एको मुमूर्च्छ गहने च किरातबाणा—
दन्यो ह्यमूर्च्छयदुरुस्त्रिपुरस्य दैत्यान्।
को वा..............................................
सत्यं.............................................. ॥८१॥

एकस्तु चक्रमधिगम्य ररक्ष लोका—
श्चक्रप्रदः पुररिपुः सुरचक्रवर्ती।
को वा..............................................
सत्यं.............................................. ॥८२॥

एकस्त्रिपादिति भृशं जगति प्रसिद्धो
ह्यन्यस्य सेवकजनोऽपि तदा प्रसिद्धः।
को वा..............................................
सत्यं.............................................. ॥८३॥

एकस्तु साधु हयवक्त्र इति प्रसिद्धो
ह्यन्यस्य पुत्र इभवक्त्र इति प्रसिद्धः ।
को वा..................................................
सत्यं................................................ ॥८४॥

एकस्य भाति चतुरानन एव सूनु—
रन्यस्य भाति हि षडानन एव सूनुः ।
को वा..................................................
सत्यं................................................ ॥८५॥

आदाय वेदमदिशद्विधये पुरैकोऽ—
न्यो वेदवाजिषु विधिं विदधे च सूतम् ।
को वा..................................................
सत्यं................................................ ॥८६॥

एको जघान नरकं सुतरामिहैक—
मन्यः स्वभक्तनरकान् बहुलान् जघान ।
को वा..................................................
सत्यं................................................ ॥८७॥

एकः प्रसिद्ध इह धेनुवधं विहित्वा
व्याघ्रं निहत्य नितरामितरो रराज ।
को वा..................................................
सत्यं................................................ ॥८८॥

एकस्तु याचकबलिं च पुनर्ययाचे
ह्यन्यो ददाविह परत्र च सौख्यमेव ।
को वा......................................
सत्यं...................................... ॥८९॥

ग्राहं निहत्य करिराजमरक्षदेको
मृत्युं निहत्य मुनिपुत्रमरक्षदन्यः ।
को वा......................................
सत्यं...................................... ॥९०॥

एकः पपौ स्तनरसं विषतीव्रवेग—
मन्यः पपौ भुवनभीकरकालकूटम् ।
को वा......................................
सत्यं...................................... ॥९१॥

भक्तेन केनचिदबन्धयदङ्घ्रिमेको—
भक्तेन केनचिदपीतयदङ्घ्रिमन्यः ।
को वा......................................
सत्यं...................................... ॥९२॥

एकोऽवधीद्रिपुगणं च कृतावतारः
शत्रून् जयेति च परः समदादनुज्ञाम् ।
को वा......................................
सत्यं...................................... ॥९३॥

ग्राहं निहत्य गजहस्तमरक्षदेको
मृत्युं निहत्य मुनिपुत्रमरक्षदेकः ।
को वा.................................................
सत्यं.................................................. ॥६४॥

एकोऽर्जुनस्य जयदः खलु सूतभावा—
दन्योऽर्जुनस्य जयदोऽभवदस्त्रदानात् ।
को वा.................................................
सत्यं.................................................. ॥६५॥

एको व्यधात्तृणमिवाद्रिवरं सुमेरुं
गोवर्धनाद्रिमितरस्तु करे दधानः ।
को वा.................................................
सत्यं.................................................. ॥६६॥

एकं द्विजातिमखिलेषु सुरेषु मध्ये
क्षत्रं परं तु परमार्थविदो वदंति ।
को वा.................................................
सत्यं.................................................. ॥६७॥

एकस्तु पीठमुपयाति जलेजनेत्रो
लिङ्गस्वरूपमधिगच्छति भूतलेऽन्यः ।
को वा.................................................
सत्यं.................................................. ॥६८॥

एको दधार कमनीयहिरण्यचेल—
मन्योऽगमत् कनकवीर्य इति प्रसिद्धिम्।
को वा...............................................
सत्यं................................................ ॥९९॥

एकोऽङ्घिदेशलवमत्र बबन्ध यत्ना—
दन्यस्य सप्तनलधीन् पिबतिस्म भक्तः।
को वा...............................................
सत्यं................................................ ॥१००॥

अद्वैतमेव भजनीयमतोऽप्रमेयं
नित्यं निरंजनमनाकृतिनिर्विकल्पम्।
सत्यं परात्परमखंडचिदात्मभाव—
मानन्दमव्ययमजं शिवमाश्रयामः ॥१०१॥

श्रीकान्तनामविबुधेन्द्रतनूभवेन—
रामेश्वराध्वरिसुधामणिना प्रणीतम्।
लोके त्विदं हरिहरस्थितितारतम्यं—
मत्वाधिकं हि शतकं सुधियः पठंतु ॥१०२॥

श्रीः

# सुभगोदयः

वैदिकमार्गप्रतिष्ठापनधुरीणैः

श्रीगौडपादाचार्यैः

विरचितः

अनन्तशयनस्थसंस्कृतभास्करमुद्रालये

तदध्यक्षैर्मुद्रयित्वा

प्राकाश्यं नीतः

१८९८ क्रिस्त्वब्दः

मूल्यं सार्धं आणकः

# उपोद्घातः

## आर्याः!

अम्बिकाचरणपङ्केरुहभृङ्गायमाणमानसानां वैदिकसार्वभौमानां सन्मार्गप्रदर्शकाः परमकारुणिकास्तत्रभवन्तः श्रीगौडपादाचार्याः शाक्तमतपरमतत्वप्रतिपिपादयिषयैव ग्रन्थमिममरचयन्.

अन्यश्चैतदीय उपनिषत्कारिकारूपो दृश्यते. तत्रत्यं च प्रकरणचतुष्टयं श्रीमच्छङ्करभगवत्पादैः माण्डूक्योपनिषदा सह साकल्येन व्याख्यातम्. त एते 'नारायणं पद्मभुवं ······· व्यासं शुकं गौडपदं महान्तम् गोविन्दयोगीन्द्रमथास्य शिष्यं । श्रीशङ्कराचार्य'मित्यादिजगद्गुरुपरम्परायां प्रसिद्धा अतिप्राचीनाः.

दुर्लभोऽप्ययं ग्रन्थः अम्बिकाप्रसाद इव मूर्तिमान् यदृच्छयास्मदालोकपदवीमारूढः; प्रकाशितश्च सर्वेऽपि तत्प्रसादभागिनो भवेयुरिति. अस्य च ग्रन्थस्य मातृकान्तरालाभादस्यां च बहुशो दोषादर्शनाद्ग्रन्थान्यथाभावभीरुभिरस्माभिर्यथामति संशोध्य मुद्रितः. यदि सन्तो ग्रन्थान्तरं प्राक्तनव्याख्यानं वा प्रेषयेयुस्तर्हि सादरं गृहीत्वा प्रकाश्येत.

ना. रामस्वामिशास्त्री.

ॐ

# सुभगोदयः

भवानि! त्वां वन्दे भवमहिषि! सच्चित्सुखवपुः
पराकारां देवीममृतलहरीं बैन्दवकलाम् ।
महाकालातीतां कलितसरणिं कल्पिततनुं
सुधासिन्धोरन्तर्वसतिमनिशं वासरमयीम् ॥ १ ॥

मनस्तत्वं जित्वा नयनमथ नासाग्रघटितं
पुनर्व्यावृत्ताक्षः स्वयमपि यदा पश्यति पराम् ।
तदानीमेवास्य स्फुरति बहिरन्तर्भगवती
परानन्दाकारा परशिवपरा काचिदपरा ॥ २ ॥

मनोमार्गं जित्वा मरुत इह नाडीगणजुषो
निरुध्यार्कं सेन्दुं दहनमपि संज्वाल्य शिखया ।
सुषुम्नां संयोज्य श्लथयति च षड्ग्रन्थि शशिनं
तवाज्ञाचक्रस्थं श्लथयति महायोगिसमयी ॥ ३ ॥

यदा तौ चन्द्रार्कौ निजसदनसंरोधनवशा-
दशक्तौ पीयूषस्रवणहरणे सा च भुजगी ।
प्रबुद्धा क्षुत्क्रुद्धा दशति शशिनं बैन्दवगतं
सुधाधारासारैः स्नपयसि तनुं बैन्दवकले ॥ ४ ॥

पृथिव्यापस्तेजः पवनगगने तत्प्रकृतयः
स्थितास्तन्मात्रास्ता विषयदशकं मानसमिति ।
तथा माया विद्या तदनु च महेशश्शिव इतः
परं तत्वातीतं मिळितवपुरिन्दोः परकला ॥ ५ ॥

कुमारीयम्मन्द्रं ध्वनति च ततो योषिदपरा
कुलं त्यक्त्वा रौति स्फुटति च महानीलपतगी ।
ततः पातिव्रत्यं भजति दहराकाशकमले
सुखासीना योषा भवसि भवसीत्काररसिका ॥ ६ ॥

त्रिकोणं ते कौळाः कुलगृहमिति प्राहुरपरे
चतुष्कोणं प्राहुस्समयिन इमे बैन्दवमिति ।
सुधासिन्धोस्तस्मिन् सुरमणिगृहे सूर्यशशिनो-
रगम्ये रश्मीनां समयसहिते त्वं विहरसे ॥ ७ ॥

त्रिखण्डं ते चक्रं शुचिरविशशाङ्कात्मकतया
मयूखैष्षट्त्रिंशद्दशयुततया खण्डकलितैः ।
पृथिव्यादौ तत्वे पृथगुदितवद्भिः परिवृतं
भवेन्मूलाधारात् प्रभृति तव षट्चक्रसदनम् ॥ ८ ॥

शतञ्चाष्टौ वह्नेः शतमपि कलाः षोडश रवेः
शतं षट् च त्रिंशत् सितमयमयूखाश्चरणजाः ।
य एते षष्टिश्च त्रिशतमभवंस्त्वच्चरणजा
महाकौलैस्तस्मान्न हि तव शिवे कालकलना ॥ ९ ॥

त्रिकोणञ्चाधारं त्रिपुरतनु तेऽष्टारमनघे
भवेत् स्वाधिष्ठानं पुनरपि दशारं मणिपुरम् ।
दशारं ते संवित्कमलमथ मन्त्रश्रकमुमे
विशुद्धं स्यादाज्ञा शिव इति ततो बैन्दवगृहम् ॥ १० ॥
त्रिकोणे ते वृत्तत्रितयमिभकोणे वसुदळं
कलाश्रं मिश्रारे भवति भुवनाश्रे च भुवनम् ।
चतुश्चक्रं शैवं निवसति दशे शाक्तिकमुभे
प्रधानैक्यं षोढा भवति च तयोश्शाक्तिशिवयोः ॥ ११ ॥
कलायां बिन्द्वैक्यं तदनु च तयोर्नादविभवे
तयोर्नादेनैक्यं तदनु च कलायामपि तयोः ।
तयोर्बिन्दावैक्यं त्रितयविभवैक्यं परशिवे
तथैवं षोढैक्यं भवति हि सपर्या समयिनाम् ॥ १२ ॥
कला नादो बिन्दुः क्रमश इह वर्णाश्च चरणं
षडब्जं चाधारप्रभृतिकममीषां च मिळनम् ।
तथैवं षोढैक्यं भवति खलु येषां समयिनां
चतुर्धैक्यं तेषां भवति हि सपर्या समयिनाम् ॥ १३ ॥
तटिल्लेखामध्ये स्फुरसि मणिपूरे भगवती
चतुर्धैक्यं तेषां भवति च चतुर्बाहुरुदिता ।
धनुर्बाणानिक्षूद्भवकुसुमजानङ्कुशवरं
लसत्पाशं हस्तैरुदितरविबिम्बाकृतिरुचिम् ॥ १४ ॥

भवत्यैक्यं षोढा भवति भगवत्यास्समयिनां
मरुत्वत्कोदण्डद्युतिनियुतभासा समरुचिः ।
भवत्पाणिव्रातो दशविध इतीदं मणिपुरे
भवानि प्रत्यक्षं तव वपुरुपास्ते न हि परम् ॥ १५ ॥
भवानि श्रीहस्तैर्वहसि फणिपाशं सृणिमथो
धनुः पौण्ड्रं पौष्पं शरमथ जपस्रक् शुकवरम् ।
अथ द्वाभ्यां मुद्रामभयवरदानैकरसिके
क्वणद्वीणां द्वाभ्यामुरसि च कराभ्यां च बिभृषे ॥ १६ ॥
त्रिकोणैरष्टारं त्रिभिरपि दशारं समुदभूद्
दशारं भूवेश्मादपि च भुवनाश्रं समभवत् ।
ततोऽभून्नागारं नृपतिदळमस्मात् त्रिवलयं
चतुर्द्वाः प्राकारत्रितयमिदमेवाम्ब चरणम् ॥ १७ ॥
चतुष्षष्टिस्तन्त्राण्यपि कुलमतं निन्दितमभूद्
यदेतन्मिश्राख्यं मतमपि भवेन्निन्दितमिह ।
शुभाख्याः पञ्चैते श्रुतिसरणिसिद्धाः प्रकृतयो
महाविद्यास्तासां भवति परमार्था भगवती ॥ १८ ॥
स्मरो मारो मारः स्मर इति स्मरो मारमदन-
स्मरानङ्गाश्चैते स्मरमदनमाराः स्मर इति ।
त्रिखण्डः खण्डान्ते कलितभुवने ते क इति यः
चतुःपञ्चार्णास्ते त्रय इति च पञ्चाक्षरमनुः ॥ १९ ॥

त्रिखण्डे त्वन्मन्त्रे शशिसवितृवह्न्यात्मकतया
स्वराश्चन्द्रे लीनाः सवितरि कलाः कादय इह ।
यकाराद्या वह्नावथ कपयुगं बैन्दवगृहे
निलीनं सादाख्ये शिवयुवति नित्यैन्दवकले ॥ २० ॥

ककाराकाराभ्यां स्वरगणमवष्टभ्य निखिलं
कलाप्रत्याहारात् सकलमभवद् व्यञ्जनगणः ।
त्रिखण्डे स्यात् प्रत्याहरणमिदमन्वक्षपयुगं
क्षकारश्चाकारोऽक्षरतनुतया चाक्षरमिति ॥ २१ ॥

विदेहेन्द्रापत्यं श्रुत इह ऋषिर्यस्य च मनो-
रयं चार्थः सम्यक् श्रुतिशिरसि तैत्रीयकऋचि ।
ऋषिं हित्वा चास्या हृदयकमले नैतमृषिमि-
त्यृचाभ्युक्तः पूजाविधिरिह भवत्याः समयिनाम् ॥ २२ ॥

त्रिखण्डस्त्वन्मन्त्रस्तव च सरघायां निविशते
श्रियो देव्याः शेषो यत इह समस्ताः शशिकलाः ।
त्रिखण्डे त्रैखण्ड्यं निवसति समन्त्रे च सुभगे
षडब्जारण्यानी त्रितययुतखण्डे निवसति ॥ २३ ॥

त्रयं चैतत् स्वान्ते परमशिवपर्यङ्कनिलये
परे सादाख्येऽस्मिन् निवसति चतुर्थैक्यकलनात् ।
स्वरास्ते लीनास्ते भगवति कलाश्रे च सकलाः
ककाराद्या वृत्ते तदनु चतुरश्रे चयमुखाः ॥ २४ ॥

हलो बिन्दुर्वर्गाष्टकमिभदळं शाम्भववपुः
चतुश्चक्रं शक्रस्थितमनुभयं शक्तिशिवयोः ।
निशाद्यादर्शाद्याः श्रुतिनिगदिताः पञ्चदशधा
भवेयुर्नित्यास्तास्तवजननि मन्त्राक्षरगणाः ॥ २५ ॥

इमास्ताः षोडश्यस्तव च सरघायां शशिकला-
स्वरूपायां लीना निवसति तव श्रीशशिकला ।
अयं प्रत्याहारः श्रुत इह कलाव्यञ्जनगणः
ककारेणाकारः स्वरगणमशेषं कथयति ॥२६ ॥

क्षकारः पञ्चाशत्कल इति हरो बैन्दवगृहं
ककारादूर्ध्वं स्याज्जननि तव नामाक्षरमिति ।
भवेत् पूजाकाले मणिखचितभूषाभिरभितः
प्रभाभिर्व्यालीढं भवति मणिपूरं सरसिजम् ॥ २७ ॥

वदन्त्येके वृद्धा मणिरिति जलं तेन निबिडं
परे तु त्वद्रूपं मणिधनुरितीदं समयिनः ।
अनाहत्या नादः प्रभवति सुषुम्नाध्वजनित
स्तदा वायोस्तत्र प्रभव इदमाहुः समयिनः ॥ २८ ॥

तदेतत् ते संवित्कमलमिति संज्ञान्तरमुमे
भवेत् संवित्पूजा भवति कमलेऽस्मिन् समयिनाम् ।
विशुद्धाख्ये चक्रे वियदुदितमाहुः समयिनः
सदा पूर्वो देवः शिव इति हिमानीसमतनुः ॥ २९ ॥

त्वदीयैरुद्योतैर्भवति च विशुद्धाख्यसदनं
भवेत् पूजा देव्या हिमकलकलाभिः समयिनाम् ।
सहस्रारे चक्रे निवसति कलापञ्चदशकं
तदेतन्नित्याख्यं भ्रमति सितपक्षे समयिनाम् ॥३० ॥

कलायाः षोडश्याः प्रतिफलितबिम्बेन सहितं
त्वदीयैः पीयूषैः पुनरधिकमाह्लादिततनुः ।
सिते पक्षे सिद्धास्तिथय इह कृष्णेऽपि च समा
यदा चामावास्या भवति नहि पूजा समयिनाम् ॥३१॥

अतः शुक्ले पक्षे प्रतिदिनमिह त्वां भगवतीं
निशायां सेवन्ते निशि चरमभागे समयिनः ।
शुचिस्स्वाधिष्ठाने रविरुपरि संवित्सरसिजे
शशी चाज्ञाचक्रे हरिहरविधिग्रन्थय इमे ॥३२॥

इडायां पिङ्गल्यां चरत इह तौ सूर्यशशिनौ
तमस्याधारे तौ यदि तु मिलितौ सा तिथिरमा ।
तदाज्ञाचक्रस्थं शिशिरतरबिम्बे रविनिभं
हृदव्यालीढं सद्भिगलितसुधासारविसरम् ॥ ३३ ॥

महाव्योमस्थेन्दोरमृतलहरीप्लावितततनुः
प्रशुष्यद्द्वै नाडीप्रकरमनिशं प्लावयति तत् ।
यदाज्ञायां विद्युन्नियुतनियुताभाक्षरमयी
सिता विद्युल्लेखा भगवति विधिग्रन्थिमभिनत् ॥ ३४ ॥

ततो गत्वा ज्योत्स्नामयसमयलोकं समयिनां
  पराख्या सादाख्या जयति शिवतत्वेन मिलिता ।
सहस्रारे पद्मे शिशिरमहसां निम्बमपरं
  तदेव श्रीचक्रं सरघमिति तद् बैन्दवमिति ॥ ३५ ॥

वदन्त्येके सन्तः परशिवपदे तत्वमिलिते
  ततस्त्वं षड्विंशा भवसि शिवयोर्मेलनवपुः ।
त्रिखण्डेऽस्मिन् स्वान्ते परमपदपर्यङ्कसदने
  परे सादाख्येऽस्मिन् निवसति चतुर्थैक्यकलनात् ॥ ३६ ॥

महावह्निर्वह्नौ वसुदलजले दिङ् मरुति दि-
  कलाश्रे मन्वश्रं हृशि वसुरधो राजकमले ।
प्रतिच्चैतद्ग्रन्थिस्तदुपरि चतुर्द्वारसंहितं
  महाचक्रं चैकं भवति भगकोणैक्यकलनात् ॥ ३७ ॥

षडम्भोजारण्यैस्त्वां समयिन इमे पञ्चकसमां
  सदा संविद्रूपां विदधति च षोढैक्यकलिताम् ।
मनो जित्वा चाज्ञासरसिजमिह प्रादुरभवत्
  तटिल्लेखा नित्या भगवति तवाधारसदनात् ॥ ३८ ॥

भवत्साम्यं केचित् त्रितयमिति कौलप्रभृतयः
  परं तत्वाख्यं चेत्यपरमिदमाहुः समयिनः ।
क्रियावस्थारूपं प्रकृतिरभिधापञ्चकसमं
  तदेषां साम्यं त्वामवनिषु च यो वेत्ति स मुनिः ॥ ३९ ॥

वशिन्याद्या अष्टावकचटतपाद्याः प्रकृतयः
स्ववर्गस्थाः स्वस्वायुधकलितहस्ताः स्वविषयाः ।
यदा वर्गा वर्णप्रचुरतरवो याभिरभवं-
स्तव प्रस्तारास्ते त्रय इति जगुस्ते समयिनः ॥ ४० ॥

इमा नित्या वर्णास्तव चरणसंमेलनवशा-
न्महामेरुस्थाः स्युर्मनुमिलनकैलासवपुषः ।
वशिन्याद्या एता अपि च सहबिन्द्वात्मकतया
महीप्रस्तारोऽयं क्रम इति रहस्यं समयिनाम् ॥ ४१ ॥

भवेन्मूलाधारं तदुपरितनं चक्रमपि तद्
द्वयं तामिस्राख्यं शिखिकिरणसंमेलनवशात् ।
तदेतत् कौलानां प्रतिदिनमनुष्ठेयमुदितं
भवत्या वामाख्यं मतमपि परित्याज्यमुभयम् ॥ ४२ ॥

अमीषां कौलानां भगवति भवेत्पूजनविधि-
स्तव स्वाधिष्ठाने तदनु च भवेन्मूलसदने ।
अतो बाह्या पूजा भवति भगरूपेण च ततो
निषिद्धाचारोऽयं निगमविरहोऽनिन्द्यचरिते ॥ ४३ ॥

नवव्यूहं कौलप्रभृतिकमिदं तेन स विभु-
र्नवात्मा देवोऽयं जगदुदयकृद्भैरववपुः ।
नवात्मा वामादिप्रभृतिभिरिदं भैरववपु-
र्महादेवी ताभ्यां जनकजननीमज्जगदिदम् ॥ ४४ ॥

भवेदेतच्चक्रद्वितयमतिदूरं समयिनां
विसृज्यैतद्युग्मं तदनु मणिपूराह्वयसदने ।
त्वया सृष्टैर्वारिप्रतिफलितसूर्येन्दुकिरणै-
र्विभालोके पूजां विदधति भवत्याः समयिनः ॥ ४५

अधिष्ठानाधारद्वितयमिदमेवं दशदलं
सहस्राराज्जातं मणिपुरमितोऽभूद्दशदलम् ।
हृदम्भोजान्मूलान्नृपदलमभूत् स्वान्तकमलं
तदैवैको बिन्दुर्भवति जगदुत्पत्तिकृद्यम् ॥ ४६ ॥

सहस्रारं बिन्दुर्भवति च ततो बैन्दवगृहं
तदेतस्माज्जातं जगदिदमशेषं सकरणम् ।
ततो मूलाधाराद् द्वितयमभवत्तद्दशदलं
सहस्राराज्जातं तदिति दशधा बिन्दुरभवत् ॥ ४७ ॥

तदेतद् बिन्दोर्यद्दशकमभवत्तत्प्रकृतिकं
दशारं सूर्यारं नृपदलमभूत् स्वान्तकमलम् ।
रहस्यं कौलानां द्वितयमभवन्मूलसदनं
तथाधिष्ठानञ्च प्रकृतिमथ सेवन्त्विह च ते ॥ ४८ ॥

अतस्ते कौलास्ते भगवति दृढप्राकृतजना
इति प्राहुः प्राज्ञाः कुलसमयमार्गद्वयविदः ।
महान्तः सेवन्ते सकलजननीं बैन्दवगृहे
शिवाकारां नित्याममृतझरिकामैन्दवकलाम् ॥ ४९ ॥

इदं कौलोत्पत्तिस्थितिलयकरं पद्मनिकरं
त्रिखण्डं श्रीचक्रं मनुरपि च तेषाञ्च मिलनम् ।
तदैक्यं षोढा वा भवति च चतुर्धेति च तथा
तयोस्साम्यं पञ्चप्रकृतिकमिदं शास्त्रमुदितम् ॥ ९० ॥

उपास्तेरेतस्याः फलमपि च सर्वाधिकमभू-
त्तदेतत् कौलानां फलमिह हि चैतत्समयिनाम् ।
सहस्रारे पद्मे सुभगसुभगोदेति सुभगे
परं सौभाग्यं यत् तदिह तव सायुज्यपदवी ॥ ९१ ॥

अतस्ते संसिद्धा सुभगसुभगाख्या गुरुकृपा-
कटाक्षव्यासङ्गात् स्रवदमृतनिष्यन्दसुलभा ।
तया विद्धो योगी विचरति निशायामपि दिवा
दिवा भानू रात्रौ विधुरिव कृतार्थीकृत इति ॥ ९२ ॥

श्रीः

॥ श्रीगणेशाय नमः ॥

# ॥ स्तोत्ररत्नानि ॥

इमानि

श्रीषण्मुखानन्दस्वामि शिष्येन

"रामानन्दस्वामिना" सङ्गृह्य

नागराक्षरैर्लेखयित्वा

मद्रपुर्यां

श्री "शिवकामविलास" यन्त्रालये

मुद्रापितानि ॥

अक्षयसंवत्सरे वृश्चिकमासि ॥

|| श्रीः ||

|| श्रीगणेशाय नमः ||

|| श्रीपरशिवाभिन्नाय परमेश्वराय नमः ||

## || अथ नटेश्वराष्टकप्रारम्भः ||

सदञ्चितमुदञ्चितनिकुञ्चितपदं झलञ्झलंचलितमञ्जुकटकं
पतञ्जलिदृगञ्जनमनञ्जनमचञ्चलपदं जननभञ्जनकरम् ।
कदम्बरुचिमम्बरवसं परममम्बुदकदम्बकविडम्बकगलं
चिदम्बुधिमणिं बुधहृदम्बुजरविं परचिदम्बरनटं हृदि भज ॥ १

हरं त्रिपुरभञ्जनमनन्तकृतकङ्कणमखण्डदयमन्तरहितं
विरिञ्चसुरसंहतिविचिन्तितपदं तरुणचन्द्रमकुटम् ।
परंपदविखण्डितयमं भसितमण्डिततनुं मदनवञ्चनपरं
चिरन्तनममुं प्रणतसञ्चितनिधिं परचिदम्बरनटंहृदि भज ॥ २

अवन्तमखिलंजगदभङ्गगुणतुङ्गममतं धृतविधुं सुरसरि-
त्तरङ्गनिकुरुम्बधृतिलम्पटजटं शमनडम्भहरणं भवहरम् ।
शिवं दशदिगन्तरविजृम्भितकरं करलसन्मृगशिशुं पशुपतिं
हरं शशिधनञ्जयपतङ्गनयनं परचिदम्बरनटंहृदि भज ॥ ३ ॥

अनन्तनवरत्नविलसत्कटककिङ्किणिझलंझलझलंझलरवं
मुकुन्दविधिहस्तगतमद्दललयध्वनिधिमिद्धिमितनर्तनपदम् ।
शकुन्तरथवर्हिरथनन्दिमुखदन्तिमुखभृङ्गिरिटिसङ्घनिकटं
सनन्दसनकप्रमुखवन्दितपदं परचिदम्बरनटं हृदि भज ॥ ४ ॥

अनन्तमहसं त्रिदशवन्द्यचरणं मुनिहृदन्तरवसन्तममलं
कबन्धवियदिन्द्ववनिगन्धवहवह्निमखबन्धुरविमञ्जुवपुषम् ।
अनन्तविभवं त्रिजगदन्तरमणिं त्रिनयनं त्रिपुरखण्डनपरं
सनन्दमुनिवन्दितपदं सकरुणं परचिदम्बरनटं हृदि भज ॥ ५

अचिन्त्यमलिवृन्दरुचिबन्धुरगलं तुहिनकुन्दनिकुरम्बधवलं
मुकुन्दसुरबृन्दवलहन्तृकृतवन्दनलसन्तमहिकुण्डलधरम् ।
अकम्पमनुकम्पितरतिं सुजनमङ्गलनिधिं गजहरंपशुपतिं
धनञ्जयनुतं प्रणतरञ्जनपरं परचिदम्बरनटं हृदिभज ॥ ६ ॥

परं सुरवरं पुरहरं पशुपतिं जनितदन्तिमुखषण्मुखममुं
मृडं कनकपिङ्गलजटं सनकपङ्कजरविं सुमनसं हिमरुचिम् ।
असङ्गमनसं जलधिजन्मगरलं कबलयन्तमतुलं गुणनिधिं
सनन्दवरदं शमितमिन्दुवदनं परचिदम्बरनटं हृदि भज ॥ ७

अजं क्षितिरथं भुजगपुङ्गवगुणं कनकशृङ्गिधनुषं करलस-

त्कुरङ्गपृथुटङ्कपरशुं रुचिरकुङ्कुमरुचिं डमरुकं च दधतम् ।

मुकुन्दविशिखं नमदवन्ध्यफलदं निगमबृन्दतुरगंनिरुपमं

सचण्डिकममुं झटिति संहृतपुरं परचिदम्बरनटंहृदि भज ॥ ८

७

अनङ्गपरिपन्थिनमजं क्षितिधुरंधरमलं करुणयन्तमखिलं

ज्वलन्तमनलं दधतमन्धकरिपुंसततमिन्द्रसुरवन्दितपदम् ।

उदञ्चदरविन्दकुलबन्धुशतबिम्बरुचिसंहतिसुगन्धिवपुषं

पतञ्जलिनुतं प्रणवपञ्जरशुकं परचिदम्बरनटं हृदि भज ॥ ९ ॥

इति स्तवममुं भुजगपुङ्गवकृतं प्रतिदिनं पठति यःकृतमुखः
सदः प्रभुपदद्वितयदर्शनपदं सुललितं चरणशृङ्गरहितम् ।
सरः प्रभवसम्भवहरित्पतिहरिप्रमुखदिव्यनुतशङ्करपदं
स गच्छति परं नतु जनुर्जलनिधिं परमदुःखजनकं दुरितम् ॥

इति श्रीपतञ्जलिमुनि विरचितं

नटेश्वराष्टकं सम्पूर्णम् ॥

शुभमस्तु ॥

॥ श्रीः ॥

॥ श्रीपरशिवाभिन्नपराशक्त्यै नमः ॥

# ॥ श्रीदेवीनवरत्नमालास्तुतिः॥

कुन्दसुन्दरमन्दहासविराजिताधरपल्लवां
इन्दुबिम्बनिभाननामरविन्दचारुविलोचनाम् ।
चन्दनागरुपङ्करूषिततुङ्गपीनपयोधरां
चन्द्रशेखरवल्लभां प्रणमामि शैलसुतामिमाम् ॥ १ ॥

दाडिमीकुसुममञ्जरीनिकरसुन्दरे मदनमन्दिरे
यामिनीरमणखण्डमण्डितशिखण्डिके तरलकुण्डले ।
पाशमङ्कुशमुदञ्चितं दधति कोमले कमललोचने
तावके वपुषि सन्ततं जननि मानसं भवतु मामकम् ॥ २

हारनूपुरकिरीटकुण्डलविभूषितावयवशोभिनीं
कारणेशवरमौलिकोटिपरिकल्प्यमानपदपीठिकाम् ।
कालकालफणिपाशबाणधनुरङ्कुशाभरणमेखलां
फालभूतिलकलोचनांमनसि भावयामि परदेवताम् ।' ३

स्मेरचारुमुखमण्डलां विविधगण्डलम्बिमणिकुण्डलां
हारदामपरिशोभमानकुचभारभीरुतनुमध्यमाम् ।
वीरगर्वहरनूपुरां विविधकारणेशपदपीठिकां
मारवैरिसहचारिणीं मनसि भावयामि परदेवताम् ॥ ४

गन्धसारघनसारचारुनवनागवल्लिरसवासिनीं
मन्धरागमधुरां वराभरणसुन्दराननशुचिस्मिताम् ।
मन्थरायतविलोचनाममलबालचन्द्रकृतशेखरी-
मिन्दिरारमणसोदरीं मनसि भावयामि परदेवताम् ॥ ५

कुण्डलत्रिविधकोणमण्डलविहारिणींपरिविकाः सिषट्
पुण्डरीकमुखभेदिनीं तरुणचण्डभानुतडिदुज्ज्वलाम् ।
मण्डलान्तमणिपीठिकामृततरङ्गिणीं तरणरूपिणीं
मण्डलान्तमणिदीपिकां मनसि भावयामि परदेवताम् ॥ ६

कालिकातिमिरकुन्तलान्तघनभृङ्गमङ्गलशरीरिणीं
चूलिकाशिखरमालिकावलयमल्लिकाकुसुमसौरभाम् ।
वालिकाचतुरगण्डमण्डलमनोहराननसरोरुहां
बालिकामखिलनायिकां मनसि भावयामि परदेवताम् ॥ ७

भूमिभारधरकुण्डलीन्द्रफणिबद्धभूवलयपीठिकां
वारिराशिमणिमेखलावयववह्निमण्डलशरीरिणीम् ।
ह्यारिगन्धवहकुन्तलान्तघनशेखरींच परमात्मिकां
चारुचन्द्रसुविलोचनांमनसि भावयामि परदेवताम् ॥ ८ ॥

वारणाननमयूरवाहमुखदाहवारणपयोधरां
वारणाधिपतिसुन्दरीं चतुरशेखरीकृतपदाम्बुजाम् ।
वारणाधिपतिपञ्चकप्रकृतिकारणप्रभृतिमातृकां
वारणात्मसुखपूरणांमनसि भावयामि परदेवताम् ॥ ९ ॥

आगमप्रणवपीठिकामखिलवर्णमङ्गलविहारिणी-
मागमावयवशोभिनीमखिलवेदसारकृतशेखरीम् ।
मूलमन्त्रमुखमण्डलामुदितनादबिन्दुनवयौवनां
मातृकां त्रिपुरसुन्दरीं मनसि भावयामि परदेवताम् ॥ १०

पद्मकान्तिपदपाणिपल्लवपयोधराननसरोरुहां
पद्मरागमणिमेखलावलयनीविशोभितनितम्बिनीम् ।
पद्मसम्भवसदाशिवान्तमयपञ्चवर्णमणिपीठिकां
पद्मिनीं प्रणवरूपिणीं मनसि भावयामि परदेवताम् ॥ ११ ॥

नित्यमेव नियमेन जप्यतां भुक्तिमुक्तिफलभोगसिद्धये ।
शङ्करेण रचिता कृपाबलान्नामरत्ननवरत्नमालिका ॥ १२ ॥

इति श्रीमत्परमहंस परिव्राजकाचार्य-

श्रीमच्छंकरभगवत्पाद विरचिता

श्रीपरदेवता नवरत्नमालिकास्तुतिः

सम्पूर्णा ॥

शुभमस्तु

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

श्रीपरदेवतायै नमः ॥

अथ

## श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-
## श्रीशङ्कराचार्याष्टोत्तरशतनामस्तोत्रम् ।

ॐ श्रीशङ्कराचार्यवर्यो ब्रह्मानन्दप्रदायकः ।
अज्ञानतिमिरादित्यः सुज्ञानाम्बुधिचन्द्रमाः ॥ १ ॥

वर्णाश्रमप्रतिष्ठाता भुक्तिमुक्तिप्रदायकः ।
शिष्योपदेशनिरतो भक्ताभीष्टप्रदायकः ॥ २ ॥

सूक्ष्मतत्वरहस्यज्ञः कार्याकार्यप्रबोधकः ।
ज्ञानमुद्राञ्चितकरः शिष्यहृत्तापहारकः ॥ ३ ॥

पारिव्राज्याश्रमोद्धर्ता सर्वतन्त्रस्वतन्त्रधीः ।
अद्वैतस्थापनाचार्यः साक्षाच्छङ्कररूपभृत् ॥ ४ ॥

षण्मतस्थापनाचार्यस्त्रयीमार्गप्रकाशकः ।
वेदवेदान्ततत्वज्ञो दुर्वादिमतखण्डनः ॥ ५ ॥

वैराग्यनिरतः शान्तः संसारार्णवतारकः ।
प्रसन्नवदनाम्भोजः परमार्थप्रकाशकः ॥ ६ ॥

पुराणस्मृतिसारज्ञो नित्यतृप्तो महान् मुनिः ।
नित्यानन्दो निरातङ्को निस्सङ्गो निर्मलात्मकः ॥ ७ ॥

निर्ममो निरहङ्कारो विश्ववन्द्यपदाम्बुजः ।
सत्वप्रधानः सद्भावः सङ्ख्यातीतगुणोज्वलः ॥ ८ ॥

अनघः सारहृदयः सुधीः सारस्वतप्रदः ।
सत्यात्मा पुण्यशीलश्च साङ्ख्ययोगविचक्षणः ॥ ९ ॥

तपोराशिर्महातेजा गुणत्रयविभागवित् ।
कलिघ्नः कालकर्मज्ञस्तमोगुणनिवारकः ॥ १० ॥

भगवान् भारतीजेता शारदाह्वानपण्डितः ।
धर्माधर्मविभागज्ञो लक्ष्यालक्ष्यप्रदर्शकः ॥ ११ ॥

नादबिन्दुकलाभिज्ञो योगिहृत्पद्मभास्करः ।
अतीन्द्रियज्ञाननिधिर्नित्यानित्यविवेकवान् ॥ १२ ॥

चिदानन्दश्चिन्मयात्मा परकायप्रवेशकृत् ।
अमानुषचरित्राढ्यः क्षेमदायी क्षमाकरः ॥ १३ ॥

भव्यो भद्रप्रदो भूरिमहिमा विश्वरक्षकः ।
स्वप्रकाशः सदाधारो विश्वबन्धुः शुभोदयः ॥ १४ ॥
विशालकीर्तिर्वागीशः सर्वलोकहितोत्सुकः ।
कैलासयात्रासम्प्राप्तचन्द्रमौलिप्रपूजकः ॥ १५ ॥
काञ्च्यां श्रीचक्रराजाख्ययन्त्रस्थापनदीक्षितः ।
श्रीचक्रात्मकताटङ्कतोषिताम्बामनोरथः ॥ १६ ॥
श्रीब्रह्मसूत्रोपनिषद्भाष्यादि ग्रन्थकल्पकः ।
चतुर्दिक्चतुराम्नायप्रतिष्ठाता महामतिः ॥ १७ ॥

द्विसप्ततिमतोच्छेत्ता सर्वदिग्विजयप्रभुः ।
काषायवसनोपेतो भस्मोद्धूलितविग्रहः ॥ १८ ॥

ज्ञानात्मकैकदण्डाढ्यः कमण्डलुलसत्करः
गुरुर्भूमण्डलाचार्यः भगवत्पादसंज्ञकः ॥ १९ ॥

व्याससन्दर्शनप्रीतः ऋष्यशृङ्गपुरेश्वरः ।
सौन्दर्यलहरीमुख्यबहुस्तोत्रविधायकः ॥ २० ॥

चतुः षष्टिकलभिज्ञः ब्रह्मराक्षसतोषकः ।
श्रीमन्मण्डनमिश्राख्यस्वयम्भुजयसन्नुतः ॥ २१ ॥

तोटकाचार्यसम्पूज्यः पद्मपादार्चिताङ्घ्रिकः ।
हस्तामलकयोगीन्द्रब्रह्मज्ञानप्रदायकः ॥ २२ ॥
सुरेश्वराख्यसच्छिष्यसंन्यासाश्रमदायकः ।
नृसिंहभक्तसद्रत्नगर्भहेरम्बनूजकः ॥ २३ ॥
व्याख्यासिंहासनाधीशो जगत्पूज्योजगद्गुरुः ॥ २४ ॥
श्रीमते शङ्कराचार्य सर्वलोकगुरुः परः ॥
इति श्रीमत्कृष्णेन्द्र विरचितं
श्रीशङ्कराचार्योष्टोत्तरशतनामस्तोत्रंसम्पूर्णम् ॥

॥ श्रीः ॥

# श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीमच्छङ्करभगवत्पादाष्टोत्तर-शतनामावलिः ॥

ॐ श्रीशङ्कराचार्यवर्याय नमः ॥
" ब्रह्मानन्दं प्रदायकाय नमः ॥
" अज्ञानतिमिरादित्याय नमः ॥
" सुज्ञानाम्बुधि चन्द्रमसे नमः ॥
" वर्णाश्रमप्रतिष्ठात्रे नमः ॥
" मुक्तिमुक्तिप्रदायकाय नमः ॥
" शिष्योपदेशनिरताय नमः ॥
" भक्ताभीष्टप्रदायकाय नमः ॥
" सूक्ष्मतत्वरहस्यज्ञाय नमः ॥
" कार्याकार्यप्रबोधकाय नमः ॥ १० ॥

ॐ ज्ञानमुद्राञ्चितकराय नमः ॥
,, शिष्यहृत्तापहारकाय नमः ॥
,, पारिव्राज्याश्रमोद्धर्त्रे नमः ॥
,, सर्वतन्त्रस्वतन्त्रधिये नमः ॥
,, अद्वैतस्थापनाचार्याय नमः ॥
,, साक्षाच्छङ्कररूपभृते नमः ॥
,, षण्मतस्थापनाचार्याम नमः ॥
,, त्रयीमार्गप्रकाशकाय नमः ॥
,, वेदवेदान्ततत्वज्ञाय नमः ॥
,, दुर्वादिमतखण्डनाय नमः ॥ २० ॥
,, वैराग्यनिरताय नमः ॥
,, शान्ताय नमः ॥
,, संसारार्णवतारकाय नमः ॥
,, प्रसन्नवदनाम्भोजाय नमः ॥

ॐ परमार्थप्रकाशकाय नमः ॥

„ पुराणस्मृतिसारज्ञाय नमः ॥

„ नित्यतृप्ताय नमः ॥

„ महते नमः ॥

„ मुनये नमः ॥

„ नित्यानन्दाय नमः ॥ ३० ॥

„ निरातङ्काय नमः ॥

„ निस्सङ्गाय नमः ॥

„ निर्मलात्मकाय नमः ॥

„ निर्ममाय नमः ॥

„ निरहङ्काराय नमः ॥

„ विश्ववन्द्यपदाम्बुजाय नमः ॥

„ सत्वप्रधानाय नमः ॥

„ सद्भावाय नमः ॥

ॐ सङ्ख्यातीतगुणोज्ज्वलाय नमः ॥
„ अनघाय नमः ॥ ४० ॥
„ सारहृदयाय नमः ॥
„ सुधिये नमः ॥
„ सारस्वतप्रदाय नमः ॥
„ सत्यात्मने नमः ॥
„ पुण्यशीलाय नमः ॥
„ साङ्ख्ययोगविचक्षणाय नमः ॥
„ तपोराशये नमः ॥
„ महातेजसे नमः ॥
„ गुणत्रयविभागविदे नमः ॥
„ कलिघ्नाय नमः ॥ ५० ॥
„ कालकर्मज्ञाय नमः ॥
„ तमोगुणनिवारकाय नमः ॥

ॐ भगवते नमः ॥
" भारतीजेत्रे नमः ॥
" शारदाह्वानपण्डिताय नमः ॥
" धर्म्माधर्मविभागज्ञाय नमः ॥
" लक्ष्यालक्ष्यप्रदर्शकाय नमः ॥
" नादबिन्दुकलाभिज्ञाय नयः ॥
" योगिहृत्पद्मभास्कराय नमः ॥
" अतीन्द्रियज्ञाननिधये नमः ॥ ६० ॥
" नित्यानित्यविवेकवते नमः ॥
" चिदानन्दाय नमः ॥
" चिन्मयात्मने नमः ॥
" परकायप्रवेशकृते नमः ॥
" अमानुषचरित्राढ्याय नमः ॥
" क्षेमदायिने नमः ॥

ॐ क्षमाकराय नमः ॥
,, भव्याय नमः ॥
,, भद्रप्रदाय नमः ॥
,, भूरिमहिम्ने नमः ॥
,, विश्वरञ्जकाय नमः ॥
,, स्वप्रकाशाय नमः ॥
,, सदाधाराय नमः ॥
,, विश्वबन्धवे नमः ॥
,, शुभोदयाय नमः ॥
,, विशालकीर्तये नमः ॥
,, वागीशाय नमः ॥
,, सर्वलोकहितोत्सुकाय नमः ॥
,, कैलासयात्रासम्प्राप्तचन्द्रमौलि
प्रपूजकाय नमः ॥

ॐ काञ्च्यां श्रीचक्रराजाख्ययन्त्रस्थापन-
दीक्षिताय नमः ॥
" श्रीचक्रात्मकताटङ्कतोषिताम्बामनो-
रथाय नमः ॥
" श्रीब्रह्मसूत्रोपनिषद्भाष्यादिग्रन्थकल्प-
काय नमः ॥
" चतुर्दिक्चतुराम्नायप्रतिष्ठात्रे नमः ॥
" महामतये नमः ॥
" द्विसप्ततिमतोच्छेत्रे नमः ॥
" सर्वदिग्विजयप्रभवे नमः ॥
" काषायवसनोपेताय नमः ॥
" भस्मोद्धूलितविग्रहाय नमः ॥
" ज्ञानात्मकैकदण्डाढ्याय नमः ॥
" कमण्डलुलसत्कराय नमः ॥ ९० ॥

ॐ गुरवे नमः ॥

,, भूमण्डलाचार्याय नमः ॥

,, भगवत्पादसंज्ञकाय नमः ॥

,, व्याससन्दर्शनप्रीताय नमः ॥

,, ऋष्यश्रृङ्गपुरेश्वराय नमः ॥ [नमः ॥

,, सौन्दर्यलहरीमुख्यबहुस्तोत्रविधायकाय

,, चतुः षष्टिकलाभिज्ञाय नमः ॥

,, ब्रह्मराक्षसतोषकाय नमः ॥

,, श्रीमन्मण्डनमिश्राख्यस्वयम्भुजय-
सन्नुताय नमः ॥

,, तोटकाचार्यसम्पूज्याय नमः ॥ १०० ॥

,, पद्मपादार्चिताङ्घ्रिकाय नमः ॥

,, हस्तामलकयोगीन्द्रब्रह्मज्ञानप्रदायकाय
नमः ॥

ॐ सुरेश्वराख्यसच्छिष्यसंन्यासाश्रमदायकाय नमः ॥

„ नृसिंहभक्तसद्रत्नगर्भहेरम्बपूजकाय नमः ॥

„ व्याख्यासिंहासनाधीशाय नमः ॥

„ जगत्पूज्याय नमः ॥

„ जगद्गुरवे नमः ॥ १०७ ॥

„ श्रीमते शङ्कराचार्याय सर्वलोकगुरवे-परस्मै नमः ॥ १०८ ॥

इति श्रीमत्कृष्णेन्द्र विरचिता
श्रीशङ्कराचार्याष्टोत्तरशतनामावलिः
सम्पूर्णा

शुभम्

THIS BOOK PUBLISHED BY THE
CONTRIBUTION OF

Mr. P. GOVINDASAWY NADAR of *Pungambadu.*
,, C. SIVALINGA NADAR of *Gummidipundi.*
,, SUBRAMANIA NADAR of *Gummangalam.*

---

Printed by C. Muniswamy Mudaliar& Sons, Madras.

श्रीः

# अथसालङ्कारशिरोव्रतशतकम्

श्री ५ महादेवाश्रम स्वामिना शैव-
जनोपकारार्थं संगृहीतम् ।

छपरानिवासिनः केवलराम गुप्तस्य साहाय्येन
मुद्रयित्वा प्रकाशितञ्च ।

मिश्रोपनामक पं० शिवदयाल शर्मणा
संशोधितम् ।

काशीदशाश्वमेधस्थामरयन्त्रे अम्बिका-
चरण चट्टोपाध्याय द्वारा मुद्रितम् ।

सन् १८८७ ई०

## ॥ अथ सालङ्कारशिरोव्रतशतकम्प्रारभ्यते ॥

॥ ॐ श्रीगणेशाय नमः ॥ ध्यात्वामहेशन्धवलन्विभूत्याः॰रुद्राक्षमालम्परमन्विशालम् । नत्वागुरून्शास्त्रविचारदक्षान् प्रख्यापयिष्येव्रतमप्रकाश्यम् ॥ १ ॥ रुद्राक्षान्कण्ठदेशेदशनपरिमितान्मस्तकेविंशतीद्वे षट्षट्कर्णप्रदेशे+करयुगलकृते द्वादशद्वादशैव । बाह्वोरिन्दोःकलाभिर्नयनयुगकृते त्वेकमेकंशि-

॰ विभूत्याधवलमिति रुद्राक्षमालमित्यनेन विशेषणद्वयेनविषयसूचकेन अनुबन्धचतुष्टययुक्तत्वात् ग्रंन्थस्यप्रवृत्तियोग्यत्वंसूचितम् अनुबन्धचतुष्टयाश्च विभूतिरुद्राक्षधारणो विषयः प्रतिपाद्यप्रतिपादकभावसबन्धः वेदप्रतिपाद्यकर्म्मणि प्रवृत्तिद्वारामोक्षादिकम् प्रयोजनम् अधिकारिणश्च शिवभक्ता एव ॥

+ अग्निरापश्च वेदाश्च सोमसूर्य्योऽनिलस्तथा । सर्वेनारदविप्रस्य कर्णेतिष्ठन्तिदक्षिणे इतिविप्रस्यदक्षिणकर्णे यज्ञोपवीतधारणे प्रमाणंसूचितम् ।

खायां बच्चस्यष्टाधिकंय: कलयतिशतकंसस्वयन्नीलकण्ठः ॥२॥ रुद्राक्षधारणेलज्जायेषामस्तिमहामुने । तेषान्नास्तिविनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥ ३ ॥ रुद्राक्षधारिणंदृष्ट्वापरिवादङ्करोतियः । उत्पत्तौतस्यसाङ्कर्य्यमस्त्येवेतिविनिश्चयः ॥ ४ ॥ रुद्राक्षधारिणोभक्त्या वस्त्रन्धान्यन्ददातियः । सर्वपाप विनिर्मुक्तः शिवलोकन्सगच्छति ॥ ५ ॥ रुद्राक्षधारिणंश्राद्धे भोजयेत्तुप्रमोदितः । पितृलोकमवाप्नोति नात्रकार्य्या विचारणा ॥ ६ ॥ अहोरुद्राक्षमाहात्म्यम्मयावक्तुन्नशक्यते । तस्मात्सर्वप्रयत्नेनकुर्य्याद्रुद्राक्षधारणम् ॥ ७ ॥ क्षणेक्षणेऽश्वमेधस्य फलमाप्नोतिपरमुख । त्रिःसप्तकुलमुद्धृत्यशिवलोके महीयते ॥ ८ ॥ रुद्राक्षस्यमुखम्ब्रह्मा विष्णुरुद्रस्तुतीरितः । विष्णुपुच्छं[१] भवेच्चैव भोगमोक्षफलप्रदम् ॥ ९ ॥ स्नानेदाने जपेहोमे वैश्वदेवेसुरार्च्चने । प्रायश्चित्ते तथाश्राद्धे दीक्षाकालेविशेषतः ॥ १० ॥ अरुद्राक्षधरोभूत्वा यत्किञ्चित्कर्म्मवैदिकम् । कुर्वन्विजस्तुमोहेन नरकेपततिध्रुवम् ॥ ११ ॥ व्याहरन्लिचनामानि येशम्भोःपरमात्मनः । रुद्राक्षालंकृताये-

---

[१] पुच्छमितिपदेन वक्त्रम्वक्त्रेणसंयोज्यं पुच्छम्पुच्छे नयोजयेत् । मेरुमूर्द्धं सुखकुर्य्यात्तदूर्ध्वंनागपाशकमिति मालालक्षणं सूचितम् ॥

च तेवैभागवतोत्तमाः ॥ १२ ॥ हस्तेचोरसिकण्ठे च कर्ण-योर्मस्तकेतथा। रुद्राक्षन्धारयेद्यस्तुसरुद्रोनात्रसंशयः ॥ १३ ॥ अवध्यःसर्वभूतानां रुद्रवद्विचरेद्भुवि । सुराणामसुराणाञ्च वन्दनीयोयथाशिवः ॥ १४ ॥ एकम्वाऽपिहिरुद्राक्षं स्नात्वाय त्नेनधारयेत्। कुलैकविंशतिमुद्धृत्य रुद्रलोकेमहीयते ॥ १५ ॥ यस्यभालेविभूतिर्नैनाङ्गे रुद्राक्षधारणम्। नशम्भोर्भुवनेपूजासद्विजःश्वपचाधमः ॥ १६ ॥ प्रयाणकालेरुद्राक्षम्बन्धयित्वा मृतोयदि। सरुद्रत्वमवाप्नोति पुनर्जन्मनविद्यते ॥ १७॥ स्व-शिष्येभ्यस्तुवक्तव्यन्नाशिष्येभ्यःकदाचन । अभक्तेभ्योऽपिमूर्खे-भ्यः कदाचिन्नप्रकाशयेत् ॥ १८॥ यस्याङ्गेनास्तिरुद्राक्षं ए-कोऽपिबहुपुण्यदः। तस्यजन्मनिरर्थःस्यात्त्रिपुण्ड्रहितंयथा ॥ १९॥ रुद्राक्षधारणादेव रुद्रोरुद्रत्वमाप्नुयात्। मुनयःसत्यसङ्क-ल्पा ब्रह्माब्रह्मत्वमागतः ॥ २० ॥ धृतरुद्राक्षकण्ठाययस्त्वन्नंस-म्प्रयच्छति। त्रिःसप्तकुलमुद्धृत्य रुद्रलोकंसगच्छति ॥ २१ ॥ रुद्राक्षं यच्छिखायांतत्तारतत्व§मितिस्मरेत्। कर्णयोरुभयोर्ब्र-ह्मन्देवन्देवीञ्चभावयेत् ॥ २२ ॥ यज्ञोपवीतेवेदांश्च तथाह-स्तेदिशःस्मरेत्। कण्ठे सरस्वतीन्देवीम्पावकञ्चाऽपिभावयेत् ॥ २३ ॥ अनेनभुक्तन्देवेनभुक्तं यत्तु तथाभवेत्। पीतंरुद्रेणत-

---

§ तारतत्वम्ब्रह्म तत्स्मरेद्ध्यायेदित्यर्थः ।

त्यीतं घ्रातंघ्रातंशिवेनतत् ॥२४॥ रुद्राक्षधारिण:पादौप्रक्षाल्या-द्भि:पिबेन्नर: । सर्वपापबिनिर्मुक्त:शिवलोकेमहीयते ॥ २५ ॥ रुद्राक्षधारकोभूत्वा यत्किञ्चित्कर्म्मवैदिकम् । कुर्वन्द्विज:सदा भक्त्या महदाप्नोतितत्फलम् ॥ २६ ॥ दिव्यवर्षसहस्रन्तु चक्षु-रुन्मीलितम्मया । पश्चान्ममाकुलाक्षिभ्य: जाताचजलविन्दव: ॥ २७ ॥ तत्राश्रुविन्दुतोजातां महारुद्राक्षवृक्षका: । बभूवुस्ते चरुद्राक्षा अष्टत्रिंशत्प्रभेदत: ॥ २८ ॥ सूर्य्यनेत्रसमुद्भूता: क-पिलाद्वादशस्मृता: । सोमनेत्रोत्थिता: श्वेतास्ते षोडशविधा क्रमात् ॥ २९ ॥ वह्निनेत्रोद्भवा:कृष्णा दशभेदाभवन्तिहि । श्वेतवर्णस्तुरुद्राक्षो जातितोब्राह्मउच्यते॥ ३० ॥ क्षात्रोरक्तस्त-थामिश्रो वैश्य:कृष्णस्तुशूद्रक: । पश्चाच्चप्रणवाभ्यान्धारणम्प-रिकीर्त्तितम् ॥ ३१ ॥ अमन्त्रेणैवशूद्रस्य रुद्राक्षन्धारणंस्मृ-तम् । अथभस्मप्रकारस्तुयथावद्विनिगद्यते ॥ ३२ ॥ शिरोव्रत-समाचारादेवब्रह्मादिदेवता: । देवताअभवन्विद्वन्खलुनान्ये-नहेतुना ॥ ३३ ॥ शिरोव्रत१विहीनस्तु सर्वधर्म्मविर्जित: । अपिसर्वासुविद्यासु नाधिकारीतिनिश्चय: ॥ ३४ ॥ शिरोव्रतं-नय:स्नातस्तन्तुनोपदिशेत्तुय: । तस्यविद्याविनष्टास्यान्निर्घृ-

---

१ शिरसि मस्तकाद्यवयवे व्रतभस्मधारणरूपं नेमंतस्य-समाचार:सम्यग्धारणम् ।

यः सगुरुः खलु ॥ ३५ ॥ जन्मान्तरसहस्रेषु नरायेधर्म्मचारिणः। तेषामेवखलुश्रद्धा जायतेनकदाचन ॥ ३६ ॥ ब्रह्मविद्योपदेश-स्य साक्षादेवाधिकारिणः । तएवनेतरेविद्वन्येतुस्नाताः शिरो-व्रतैः ॥ ३७ ॥ ब्रह्मविष्णुमहेशाश्चतिस्रोरेखाइतिस्मृताः । आ-द्यान्ब्रह्मांततोबिष्णुस्तदूर्ध्वन्तुमहेश्वरः ॥ ३८ ॥ उद्धूलनंत्रिपुण्ड्र-ञ्च भक्त्यानैवाचरन्तिये। तेषान्नास्तिविनिर्मोक्षः संसाराज्जन्म-कोटिभिः ॥ ३९ ॥ येषाम्बपुर्मनुष्याणान्त्रिपुण्ड्रेणबिनास्थित-म्। श्मशानसदृशन्तत्स्यान्नप्रेक्ष्यम्पुण्यकृज्जनैः ॥ ४० ॥ धिग्भ-स्मरहितम्भालन्धिग्ग्राममशिवालयम् । धिगनीशार्चनञ्जन्म धिग्विद्यामशिवाश्रयाम् ॥ ४१॥ त्रिपुण्ड्रंयेविनिन्दन्तिनिन्द-न्तिशिवमेवते। धारयन्तिचयेभक्त्या धारयन्तितमेवते ॥ ४२ ॥ कृतंस्यादकृतन्तेन श्रुतमप्यश्रुतम्भवेत्। अधीतमनधीतञ्चत्रिपु-ण्ड्रंयोनधारयेत् ॥ ४३ ॥ वृथावेदावृथायज्ञावृथादानम्वृथा-तपः। वृथाव्रतोपवासेनत्रिपुण्ड्रंयोनधारयेत् ॥ ४४ ॥ भस्म-धारणकन्त्यक्त्वा मुक्तिमिच्छतियः पुमान्। विषपानेननित्यत्व-ङ्कुरुतेह्यात्मनोहिसः॥ ४५ ॥ स्रष्टासृष्टिच्छलेनाह त्रिपुण्ड्रस्य-चधारणम् । ससर्जसललाटंहि तिर्य्यगूर्द्ध्वन्नवर्त्तुलम् ॥ ४६ ॥ तिर्य्यग्रेखाप्रदृश्यन्ते ललाटेसर्वदेहिनाम्। तथापिमानवामू-र्खा नकुर्वन्तित्रिपुण्ड्रकम् ॥ ४७ ॥ नतद्यानन्नतन्मोक्षन्नत-

त्त्भस्मानन्नतत्तपः । विनातिर्य्यक्त्रिपुण्ड्रेण द्विजेनयदनुष्ठितम् ॥ ४८ ॥ वेदस्याऽध्ययनेशूद्रो नाधिकारीयथाभवेत् । त्रिपुण्ड्रेणविनाविप्रो नाधिकारीशिवार्चने ॥ ४९ ॥ भस्मनासाग्निहोत्रेण लिप्तःकर्म्मसमाचरेत् । अन्यथासर्वकर्म्माणि नफलन्तिकदाचन ॥५०॥ सत्यंशौचंतपोहोमस्तीर्थंदेवादिपूजनम् । तस्यव्यर्थमिदंसर्वं यस्त्रिपुण्ड्रन्नधारयेत् ॥ ५१ ॥ त्रिपुण्ड्रधृग् † विप्रवरोयोरुद्राक्षधरश्शुचिः । समाप्नोतिपरम्ब्रह्म यतोनावर्त्ततेपुनः ॥ ५२ ॥ महापातकसङ्घांश्चपातकान्यपराण्यपि । नश्यन्तिमुनिशार्दूलसत्यंसत्यन्नचान्यथा ॥ ५३ ॥ यतीनाञ्ज्ञानदम्प्रोक्तम्वनस्थानाम्विरक्तिदम् । गृहस्थानाम्मुनेतद्वद्धर्म्मह्रद्धिकरन्तथा ॥ ५४ ॥ ब्रह्मचर्य्याश्रमस्थानां स्वाध्यायप्रदमेवच । शिवेनविष्णुनाचैव ब्रह्मणावज्रिणातथा ॥ ५५ ॥ हिरण्यगर्भेण तथा दिक्पालैर्वरुणादिभिः । देवताभिर्धृतम्भस्मत्रिपुण्ड्रोद्धूलनात्मकम् ॥ ५६ ॥ उमादेव्याचलक्ष्म्याच वाचाचान्याभिरास्तिक । यक्षराक्षसगन्धर्वसिद्धविद्याधरादिभिः ॥ ५७ ॥ उद्धूलनं त्रिपुण्ड्रञ्च यैःसमाचरितम्मुदा । तएवशिष्टाविद्वांस नेतरेमुनिपुङ्गव ॥ ५८ ॥ त्रिपुण्ड्रधारिणोभिक्षा प्रदानेनैवकेवलम् । ते-

---

† त्रिपुण्ड्रधृगित्यनेन शिववाचकेन पदेन ग्रन्थमध्ये मङ्गलं सूचितम् ।

नाधीतंश्रुतन्तेनतेनसर्वमनुष्ठितम् ॥ ५८॥ छद्मनापिचरद्योहि
भूतिशासनमैश्वरम् ।सोऽपियाङ्गतिमाप्नोतिनतांयज्ञशतैरपि॥
६० ॥ सम्पर्काल्लीलयावापि भयाद्वाधारयेत्तु यः । विधियुक्तो
विभूतिन्तुसचपूज्योयथाह्यहम्॥६१॥ शिवस्यविष्णोर्देवानाम्ब्र-
ह्मणस्तृप्तिकारणम् । पार्वत्याश्चमहालक्ष्म्या भारत्यास्तृप्तिका-
रणम् ॥ ६२ ॥ दानंयज्ञाश्चधर्माश्च तीर्थयात्राश्चनारद । ध्यान-
न्तपस्त्रिपुण्ड्रस्य कलान्नार्हन्तिषोडशीम् ॥ ६३ ॥ यथाराजास्व-
चिह्नाङ्कं स्वजनम्मन्यतेसदा । तथाशिवस्त्रिपुण्ड्राङ्कंस्वकीयमिव
मन्यते ॥ ६४ ॥ नास्यज्ञानम्परीक्षेत नकुलन्नव्रतन्तथा । त्रिपु-
ण्ड्राङ्कितभालेन पूज्य एवहिनारद ॥६५॥ एतानिपञ्चशिवमन्त्र-
पवित्रितानि भस्मानिकामदहनाङ्गविभूषितानि । त्रैपुण्ड्रका
णिरचितानिललाटपट्टे लुम्पन्तिदैवलिखितानिदुरक्षराणि ॥
६६ ॥ भस्मदिग्धशरीराययोददातिधनम्मुदा । तस्यसर्वाणि
पापानिविनश्यन्तिनसंशयः ॥ ६७ ॥ भस्मस्नानेनपुरुषकुलस्यो-
द्धारकोभवेत् । भस्मस्नानञ्जलस्नानादसंख्येयगुणान्वितम् ॥६८॥
येभस्मधारिणंदृष्ट्वा परिक्षमाभवन्तिहि । देवासुरमुनीन्द्रैश्चपू-
ज्यानित्यन्नसंशयः ॥ ६९ ॥ भस्मसंच्छिन्नसर्वाङ्गं दृष्ट्वोत्तिष्ठतियः
पुमान् । तंदृष्ट्वादेवराजोऽपिदण्डवत्प्रणमिष्यति ॥ ७० ॥ यथा-
विधिललाटेत्रैवह्निवीर्य्यप्रधारणात् । नाशयेल्लिखितांतामील-

ल्लाटस्थांल्लिपिन्ध्रुवम्॥७१॥भासनाद्भसितम्प्रोक्तम्भस्मकल्मषभ-
क्षनात्। भूतिर्भूतिकरीपुंसांरक्षारक्षाकरीपरा॥७२॥ भस्मस्ना-
नाद्विशुद्धात्मा जितक्रोधोजितेन्द्रियः। मत्समीपंसमागम्य
नसभूयोभिवर्त्तते ॥ ७३ ॥ नगायत्र्युपदेशोऽपिभस्मनाधा
रणम्बिना। ततोधृत्वैवभस्माङ्गे गायत्रीजपमाचरेत् ॥ ७४ ॥
यस्यास्तिसहजाप्रीतिर्मणिवद्भस्मसंग्रहे। सएवब्राह्मणोब्रह्म
न्सतंग्रसत्यम्मयोच्यते ॥ ७५ ॥ नयस्यसहजाप्रीतिर्मणिवद्भस्म-
संग्रहे। सचाण्डालइतिज्ञेयोजन्मजन्मान्तरेध्रुवम् ॥७६॥ विभू-
तिधारणन्त्यक्त्वा कुर्वन्हेमतुलामपि। नतत्फलमवाप्नोति पति-
तोहिभवेद्द्विजः ॥७७॥ यथोपवीतरहितैःसन्ध्यानक्रियतेद्विजैः।
तथासंध्यानकर्त्तव्या विभूतिरहितैरपि ॥७८॥ गतोपवीतैःस-
न्ध्यायाञ्चार्थ्यप्रतिनिधिक्वचित्। विभूतिधारणेत्वन्योनास्तिप्र-
तिनिधिक्वचित् ॥ ७९ ॥ विभूतिधारणन्त्यक्त्वा यदिसन्ध्यांकरो-
तिचेत्। यथाशुच्याऽन्त्यजोवेदान्प्रत्यवैतितथाद्विजः ॥ ८० ॥
अकारोऽनामिकाप्रोक्ता उकारोमध्यमाङ्गुलिः। मकारस्त-
र्जनीतस्मात्त्रिपुण्ड्रन्त्रिगुणात्मकम् ॥ ८१ ॥ भालम्बिभूतिध-
वलम्बिलोक्ययमकिङ्कराः। पापिनोऽपिपलायन्ते भीताःपा-
शुपतास्ततः ॥ ८२ ॥ सर्वेभ्योभूतसत्वेभ्यो यतोरक्षेदहर्निश-

म् । रक्षत्येषाततःप्रोक्ता विभूतिर्भूतिकारयतः ॥ ८३ ॥ भासनाद्भत्सनाद्भस्म पांसुःपांसुत्वकृदायतः। पापानांरक्षणात्क्षारो वुधैरेवन्निरुच्यते ॥८४॥ प्रातःससलिलम्भस्ममध्यान्हेगन्धमिश्रितम् । सायान्हे निर्जलम्भस्म एवम्भस्मविलेपयेत् ॥ ८५ ॥ आग्नेयमुच्यतेभस्म दग्धगोमयसम्भवम्। तदेवद्रव्यमित्युक्तन्त्रिपुण्ड्रस्य महामुने ॥ ८६ ॥ अग्निहोत्राग्निजम्भस्म वीरजाहोमजन्तथा । औपासनसमुत्पन्नं समिदग्निसमुद्भवम् ॥ ८७ ॥ समिदग्निसमुत्पन्नन्धार्य्यस्वैब्रह्मचारिणा । शूद्राणांश्रोत्रियागारम्पचनाग्नि समुद्भवम् ॥ ८८ ॥ अन्येषामपिसर्वेषान्धार्य्यन्दावानलोद्भवम् । मध्यान्हात्प्राग्गृहिणाञ्जलसंयुक्तं यतीनाजलवर्जितम् ॥ ८९॥ मध्यान्हात्प्राग् जलैर्युक्तम्परतोजलवर्जितम् । मध्यमाङ्गुलित्रयेणैव स्वदक्षिण करस्यच ॥ ९० ॥ ललाटेहृदयेनाभौ गलांऽसेबाहुसन्धिषु । पृष्ठदेशेशिरस्येवं स्थानेष्वेतेसुधारयेत् ॥ ९१ ॥ षडङ्गुलिप्रमाणेन ब्राह्मणानान्त्रिपुण्ड्रकम् । नृपाणांचतुरङ्गुल्यस्वैश्यानान्द्वयङ्गुलम्मतम् ॥९२॥ शूद्राणामथसर्वेषामेकाङ्गुल्यं त्रिपुण्ड्रकम् ।निर्मन्त्रकन्तुतञ्चैव यन्नाधिकारीयतोऽस्तिसः॥९३॥ मध्यमानामिकाङ्गुल्योर्मध्ये तुप्रतिलोमतः । अङ्गुष्ठेनकृतारेखा त्रिपुण्ड्रः सोऽभिधीयते ॥ ९४ ॥ अग्निरित्यादिभिर्मन्त्रैश्शुद्धब्रह्माभिम-

---

* पांसुत्वम्पापं इतिखण्डयतिनिपातनात्साधु ॥

न्वितम् । पश्चाद्वरेणमन्त्रेणत्र्यायुषेणतथैवच ॥ ९५ ॥ भस्म गायत्रि*मन्त्रेण मन्त्रेणप्रणवेणवा । अथाद्यभस्मगायत्र्याकृत निर्माणमुच्यते ॥ ९६ ॥ अन्तरिक्षेगृहीत्वातुगोमयंयोसुनिस्ह-तम् । पिंडीकृत्यशुष्कार्थं शुद्धे पात्रेविनिक्षिपेत् ॥ ९७॥ शुभेदि-नेतु तैःपिण्डैःस्वाहान्तैःपञ्चवायुभिः । घृतेनचरुणाचैव हवन ङ्कारयेद्बुधः ॥ ९८ ॥ तादृशन्धारयेद्भस्म तथोऽग्निहोत्रजादिक-म् । ब्राह्मणस्यचगौःश्वेता रक्तागौःक्षत्रियस्यच ॥९९॥ पीतवर्णा तुवैश्यस्य कृष्णाशूद्रस्यकथ्यते। शिरोव्रताख्यं शतकं जावाल्यादौ तुविस्तृतम् ॥१००॥पञ्चक्रोशात्मकंलिङ्गम्मध्यमा§त्प्रमितंस्मृतौ। तत्रजान्हविजोभेदः पूर्वोऽयस्पश्चिमस्त्वयम् ॥ १०१ ॥ पूर्वभा-गेतुतत्रास्ति कैलासारामकस्थनम् । महादेवाश्रमास्तत्र ब्रह्म-विद्यान्तपारगाः ॥ १०२ ॥ अन्ताकारविनिर्मुक्ता लच्चाधीशेपुर स्थितः । बाणवर्गोद्भवोबाण अग्निवर्गशरादयः ॥१०३॥ क्रम-

---

* सद्योजाताय विद्महे महादेवायधीमहि तन्नोरुद्र प्र-चोदयादित्येषा भस्मगायत्री ॥

§ मध्यमेश्वरमारभ्य यावद्देहलिकंगणं सूत्रस्वङ्गाचतुर्दिं-क्षु भ्रामयेत्तत्तु वर्त्तुलं तंदेशंकाशिकामानं माननीयंसदाबुधै-रितिकाशीखण्डः ॥

शोदत्तसंयुक्तः सतैस्तत्र नियोजितः । यथाप्रकाशितस्तैस्तु सालङ्कार§न्विदम्ब्रतम् ॥१०४॥ तथा बिन्धस्तवान्प्राप्तस्तेषामाज्ञानुसारतः । समाप्तिश्चागमद्ग्रन्थः पञ्चाधिकशतैः शुभैः ॥ १०५ ॥

---

§ अलङ्कारैश्चसहितं सालङ्कारं शिरसिमस्तकाद्यस्थाने व्रतमुन्नधारणरूपं शुद्धियमम् तस्यशतकस्य आख्या आख्यानं यस्मिन् सचासौ ग्रन्थः ॥

॥ इतिश्री सालङ्कारशिरोव्रताख्यशतकग्रन्थः समाप्तः ॥

॥ श्रीः ॥
सरस्वती-स्तोत्रम्
सम्पादक—
सरयूप्रसाद पाण्डेय ।

वाणी-विलासिनी-भाषाटीका-सहितम्

# श्रीसरस्वती-स्तोत्रम्।

सम्पादक
"साहित्यालङ्कार"
श्रीयुत पं० सरयूप्रसाद पाण्डेय "विशारद"

प्रकाशक—
"नवयुवक-परिषद्", दुबहर।
पो० भरसर, जि० बलिया।

सं० १९८२ वि०।

प्रथमबार १००० प्रति } वसन्त-पञ्चमी { मूल्य दो आना।

# भूमिका।

आज बहुत दिनोंकी आशालता पल्लवित एवं पुष्पित हुई। [जि]सके लिये सहृदयजन सदा लालायित रहते थे, जिसकी [पर]म आवश्यकता युवक समाज में कई वर्षों से खटक रही [थी] तथा सभी युवक, कवि होने एवं यशस्वी होनेके उद्योगमें [स]दा लगे रहने पर भी जिसके अभावसे वे सफल-प्रयत्न [न]हीं हो सकते थे, उस अभावकी पूर्त्तिके लियेही यह रत्न [आ]प लोगोंके सम्मुख उपस्थित किया जारहा है। जो पुराण-[सागर]से मथन करके संगृहीत किया गया है।

इसके संग्रहकर्त्ता तथा सम्पादक "साहित्यालङ्कार" पं० [स]रयूप्रसाद पाण्डेयजी "विशारद"(अध्यापक-जयनारायण [हाई]स्कूल, काशी) हैं। आपने अनुग्रहपूर्वक इस स्तोत्र-रत्न [का] संग्रह करके हम हिन्दुओंको. विशेषतः युवकवर्गको बड़ा [कृ]तार्थ किया है। सर्वोपयोगी समझ कर ही यह स्तोत्र ["]युवक-परिषद्" द्वारा प्रकाशित किया गया है। आशा [है य]शोऽभिलाषिणी हिन्दू जनता इस यशस्कर स्तोत्रसे अपने[को] वंचित न करेगी।

दुबहर (बलिया) } विनीत—
[वि]जयादशमी सं० १९८३ वि० } रामाशीष सिंह।

---

हम भूतपूर्व "नरसिंह" सम्पादक श्रीमान् ठा० रामाशीष [सिंह]जीको कोटिशः धन्यवाद देते हैं—जिन्होंने अपने परिषद्[में] इस स्तोत्रका प्रकाशन करके हमें कृतार्थ किया है।

—सम्पादक।

# नम्र-निवेदनम्।

मनुष्यका यह दुर्लभ शरीर पाकर ऐसा कौन होगा, जिसे कविता-कामिनीसे प्रेम न हो। काव्यग्रन्थोंके पढ़ने तथा सुनने के साथ २ कविता करनेकी लालसा भी मनुष्यमें स्वाभाविक हुआ करती है। फिरभी सभी कविता क्यों नहीं करते ? सभी कवि क्यों नहीं हो जाते ? उत्कट इच्छा रखते हुए भी उनके इस सन्मार्गमें कौन सी विघ्न-बाधा आ उपस्थित होती है ? इत्यादि प्रश्नोंके उत्तरमें यही कहा जा सकता है, कि मानवी-उद्योग के अतिरिक्त भी कोई ऐसा अदृष्ट कारण है जो अभिलाषा रखते हुए भी मनुष्योंको सफल प्रयत्न नहीं होने देता। यह किसकी इच्छा नहीं, कि मैं राजा होऊँ, मैं गुणी होऊँ, मेरा नाम संसारमें सदा अमर रहे तथा लोग मुझे आदरकी दृष्टिसे देखें।

यह प्राकृतिक नियम है, कि कारणके बिना कार्यकी उत्पत्ति कदापि नहीं होती। जब मनुष्यमें कविता करनेकी उत्कट इच्छा होती है, तब समझना चाहिये, कि अवश्य कोई बीज उसके हृदय-क्षेत्रमें पड़ा है-जिसके अङ्कुरित होनेके लिये किसी उपयुक्त साधनकी आवश्यकता है।

कविवर वामनाचार्य्यने अपने "काव्यालङ्कार सूत्र" में लिखा है, कि "कवित्वबीजं प्रतिभानम्" अर्थात् कवित्वशक्ति

का प्रधान कारण कोई पूर्व जन्मार्जित संस्कार-विशेष है, जो यथा समय जीवन ( जल ) पाकर अङ्कुरित होता है। जैसे अन्यान्य कार्य्यों के लिये संसारमें अनेक साधन विद्यमान हैं, वैसेही कवित्वशक्ति की प्राप्तिके लिये भी अनेक साधन देखे जाते हैं। परन्तु इसके लिये उपयुक्त समय तथा सामग्रीकी आवश्यकता रहते हुए भी किसी दैवीशक्तिका होना अनिवार्य्य होता है; क्योंकि भूतपूर्व सुकवियोंमें प्रायः सभी ऐसेही थे। उन्हें किसी न किसी देव-देवीका इष्ट रहता था। यह कौन नहीं जानता कि कविकुल तिलक कालिदास को सरस्वती देवी का इष्ट था; क्योंकि देवीने स्वयं कहा है, कि "भवभूतिकविः श्रेष्ठःकालिदासस्त्वहं स्वयम्"।

आजकल स्वेच्छापूर्वक काव्य पढ़ते हुए, कविता करते हुए भी कोई सत्कवि नहीं देखनेमें आता। इससे सिद्ध होता है, कि इन कवियोंके पास कोई दैवी शक्ति नहीं है। यही कारण है जो ऐसे कवियोंकी कविता चिरस्थायिनी तथा सर्वहृदय-ग्राहिणी नहीं होती और न वैसे प्रसाद, माधुर्य्यादि गुण ही आने पाते हैं, जैसे प्राचीन कवियोंकी कवितामें पायी जाती हैं। यही कारण है, कि रामायण आदिकी भाँति उनके पढ़ने में उत्तरोत्तर उत्कण्ठा भी नहीं बढ़ती। उन्हें तो केवल एकही बार पढ़ने में सन्तोष हो जाता है। यही उनकी सर्वव्यापकता के अभाव में पुष्ट-प्रमाण कहा जा सकता है। तात्पर्य्य यह कि कवि बननेवालों को किसी न किसी देवताकी उपासना अवश्य अपेक्षित है।

अब प्रश्न यह उपस्थित होता है, कि वह उपासाना किसकी होनी चाहिये? देव की या देवी की? मेरी समझमें तो

"भारते भारती भाति वागधिष्ठातृ देवता" ( वाणीकी प्रधान देवता इस भारतवर्ष में सरस्वती देवीही हैं ) इस प्रमाण से सरस्वती देवीकी ही आराधना कवित्वशक्तिके लिये उपयुक्त है। यही बिचार कर मैं आज आप सहृदय सज्जनोंकी सेवा में यह स्तोत्र लेकर उपस्थित हुआ हूँ।

यह स्वप्नोपलब्ध स्तोत्र, अपने प्रातःस्मरणीय श्री ६ गुरु जी की कृपासे ही मैंने प्राप्त किया है-जो देवी भागवत (पुराण) से सङ्कलित है। इस स्तोत्रके माहात्म्य के विषयमें यही कहना पर्य्याप्त होगा, कि कविता प्रेमी जनोंको अपनी मनोकामना सिद्ध करनेके लियेही इस स्तोत्रका उद्घाटन किया है। अतः प्रत्येक यशोऽभिलाषी व्यक्ति को इसका प्रतिदिन पाठ करना श्रेयस्कर होगा।

अब आशा क्या; पूर्ण विश्वास है, कि हिन्दी तथा संस्कृत-साहित्यसे अनुराग रखनेवाले सज्जन अवश्यही इस अमोघ शस्त्रको प्राप्त करनेसे न चूकेंगे। क्योंकिः—

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्व दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा॥"

दुबहर, बलिया
विजयादशमी, सं. १९८३ वि०

नम्र-निवेदकः—
सरयूप्रसाद पाण्डेय।

श्री सरस्वत्यै नमः ।

वन्दे वीणाधरीं वाणीं मरालवर वाहनाम् ।
सुकवीन्द्रो भवेन्नित्यं यदनुग्रहतो जनः ॥
—"सरयू" ।

## अथ श्रीसरस्वती-स्तोत्रम् ।

( वाणी-विलासिनी-भाषाटीका-सहितम् )

### मूल-मङ्गलम् ।

वीणाविभूषितकरां विमलां विचित्राम् ।
वाग्देवतां विमलबुद्धिविकासिनीञ्च ॥
श्रीशारदां सुरनुतां सततं प्रणम्य ।
सम्पाद्यते हि सुधियां सुखदस्स्तवोऽयम् ॥ १ ॥

अर्थः—वीणा से सुशोभित भुजावाली पवित्र तथा विचित्र शरीरवाली, निर्मल बुद्धिका विकास करनेवाली, वाणीकी अधिष्ठातृ देवता तथा देवताओंसे पूजित,—ऐसो श्रीशारदा देवीको सदैव प्रणाम करके मैं कविजनोंको सुख देनेवाले इस स्तोत्र ( सरस्वती-स्तोत्र ) का सम्पादन करता हूँ ॥ १ ॥

### टीका-मङ्गलम् ।

श्रीवाणी वीणाधरी; पद-सरोज हिय धारि ।
विमल बुद्धि-विस्तार हित; टीका करौं विचारि ॥

### गुरु-शिष्य-सम्वाद ।

आगते कलिकालेऽपि काशी भूमौ विभात्यहो ?
यत्र नित्यं प्रकुर्वन्ति विद्याध्ययनमुत्तमम् ॥ २ ॥

तत्रैव सुखमासीनं गुरुं पप्रच्छ शिष्यकः ।
कलावस्मिन् गुरो ! शङ्कामामेकाबाधतेऽधुना ॥३॥

अर्थः—अहाहा ! घोर कलियुगके आनेपर भी यह काशी नगरी पृथ्वीमें चमक रही है। जहाँ पर अनेक मनुष्य प्रति दिन उत्तम विद्या (संस्कृत भाषा) का अध्ययन कर रहे हैं॥२॥ वहीं पर एक शिष्य ( छात्र ) ने सुखपूर्वक बैठे हुए अपने गुरुसे प्रश्न किया, कि हे गुरुदेव ! इस कलिकालमें मुझे एक शङ्का ( सन्देह ) चिन्तित कर रही है ॥ ३ ॥

शिष्य उवाच—

कथंनु जायते पुंसां सत्कविर्न सुधीस्तथा ।
पुरातुव्यासवाल्मीक्योर्यथा वै नामश्रूयते ॥४॥

अर्थः—हे गुरो ! इस समय मनुष्योंमें वैसे पण्डित और सत्कवि क्यों नहीं होते ? जैसे पहिले युगोंमें आदिकवि वाल्मीकि तथा व्यासजीके नाम सुने जाते हैं ॥ ४ ॥

गुरुरुवाच—

धन्योऽसि बालशिष्योऽपि प्रश्नस्त्वेष कृतोयतः ।
अतएव प्रसन्नोऽहं नितरां त्वयि धीमति ॥५॥
शृणु चाथ प्रवक्ष्यामि यस्मान्न दृश्यते कविः ।
न स कालो न देशोऽयं म्लेच्छैराच्छादितोयतः॥६॥

अर्थः—बाल शिष्य होते हुए भी तुम धन्यवादके पात्र हो; क्योंकि तुमने इस प्रकारका प्रश्न किया ? ( जैसा विद्वान् करते हैं ) इसलिये मैं तुम्हें विद्वान् समझकर तुम्हारे ऊपर अत्यन्त प्रसन्न हूँ ॥ ५ ॥ हे शिष्य ! सुनो । जिस कारणसे कवि नहीं दृष्टिगोचर होते उसे मैं कह रहा हूँ । देखो, अब न तो वह समय है और न वह देशही है ( जो पहिले था ) क्योंकि अब म्लेच्छोंका अधिकार हो गया है ॥ ६ ॥

शिष्य उवाच—

भगवन्तर्हि किन्नैवं कोऽप्युपायो भविष्यति ?
येनैवाविर्भवेत्पुंसां पुनर्विद्वांश्च सत्कविः ॥७॥

अर्थः—हे भगवन् ! तो क्या कोई इस प्रकारका उपाय नहीं होगा ? जिससे फिर भी मनुष्यों में विद्वान् और सत्कवि उत्पन्न होवें ॥ ७ ॥

गुरुरुवाच—

कथन्नवत्स, संसारे मानवीं तनुमाश्रितः ।
भविष्यति सुधीर्लोको यद्युपायं करिष्यति ॥८॥

अर्थः—हे वत्स ! संसारमें मनुष्यका शरीर पाकर यदि वह उपाय करेगा तो क्यों नहीं सत्कवि होगा ॥ ८ ॥

शिष्य उवाच—

येनोपायेन लोकेऽस्मिन् भवन्ति कवयो नराः ।
स उपायः प्रवक्तव्यो भवद्भिस्तत्वदर्शिभिः ॥९॥

अर्थः—हे गुरो! जिस उपायसे इस संसारमें मनुष्य कवि होते हैं, वह उपाय आपसे कहने योग्य है; क्योंकि आप तत्त्ववेत्ता हैं ॥ ९ ॥

## गुरुरुवाच—

"प्रतिभानं कवित्वस्य बीजं स्यादिति" कथ्यते ।
तद्बीजं मानवानां तु हृत्क्षेत्रेषु व्यवस्यति ॥१०॥
तदेवसमयं प्राप्य गीःस्तोत्राऽमृतवृष्टिभिः ।
प्ररोहति तथा वत्स फलपुष्पसमन्वितम् ॥११॥
भवतीत्येव विज्ञाय त्वयाऽपि द्विजनन्दन !
कवित्वस्य विकासायप्रपाठ्योऽयंस्तवःशुभः॥१२

अर्थः—हे वत्स ! कवित्व शक्ति का बीज ( प्रधान कारण ) पूर्वजन्मका संस्कार है—ऐसी शास्त्रकारोंकी आज्ञा है। वह बीज मनुष्योंके हृदयरूपी क्षेत्रोंमें स्थापित रहता है। जो समय पाकर श्रीसरस्वती देवी के आराधनरूपी अमृत की वृष्टिसे अङ्कुरित होता है, और वही कालान्तरमें पुष्प-फलसे युक्त होता है,—यह जानकर हे विप्रकिशोर! तुम को भी अपनी कवित्वशक्तिके विकासके लिये यह स्तोत्र सदैव पढ़ना चाहिये ॥ १०-११-१२ ॥

## शिष्य उवाच—

कस्मादिदन्तुगीःस्तोत्रंप्राप्तं केन कृतं पुरा ।
किं विधानं फलं किञ्च ब्रूहि सर्वं समासतः ॥१३॥

अर्थः—हे गुरुदेव ! आपने यह सरस्वती स्तोत्र किससे पाया, सबसे प्रथम किसने इसका पाठ किया और इसका विधान तथा फल क्या है—इत्यादि प्रश्नोंको संक्षेपमें बतलाइये ॥

गुरुरुवाच—

देवीभागवतात्प्राप्तं व्यासेनादौ कृतं पुरा ।
देवीपूजाविधानेन कवित्वं फलमाप्नुयात् ॥१४॥

अर्थः—हे शिष्य! मैंने इसे देवीभागवत *(पुराण) से पाया है, व्यासजीने † सर्वप्रथम इसका प्रयोग किया है। सरस्वती पूजाके विधानसे इसका पूजन करना चाहिये। इसके पाठ से कवित्व शक्तिरूपी फलकी प्राप्ति होती है ॥१४॥

शिष्य उवाच—

अस्य पाठे नरः कीदृगधिकारी भवेद्गुरो ।
वदस्वेतद्विनिश्चित्य मयि चेदस्त्यनुग्रहः ॥१५॥

---

* आदौ सरस्वती पूजा श्रीकृष्णेन विनिर्मिता ।
यत्प्रसादान्मुनिश्रेष्ठ ! मूर्खो भवति पण्डितः ॥
माघस्य शुक्ल पञ्चम्यां विद्यारम्भे च सुन्दरि ।
मदनुरेण करिष्यन्ति तव पूजाम्फलप्रदाम् ॥
(देवी भा० ९ स्कं० ४ अ० १० श्लो० )

† पुरेव जाह्नवीतीरे पुण्यक्षेत्रेऽत्र भारते ।
व्यासाय प्रददौतवेमं श्रीकृष्णश्चहरिःस्वयम् ॥
(देवी भा० ९ स्कं० ४ अ० )

